'अचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञ-मिश्रस्य' इति भाष्यवाक्य इत्यर्थः। पूर्वं पदं—अचिन्त्यविविधविचित्ररचनस्येति पदम्। अचेतनांशे—कार्यवर्गैकदेशेष्वचेतनेषु वैचित्रीमाह । अथ—अनन्तरम् । नियतेत्यादिकं—नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्त-क्षेत्रज्ञमिश्रस्येति पदम् । चेतानांशे—कार्यवर्गैकदेशेषु चेतनेषु वैचित्री-माह । तदिदमाहुः व्यासपादाः "तत्राचिदंशवैचित्र्यमाह अचिन्त्येत्यादिना, अथ चिद्वैचित्र्यमाह नियतेति" इति ॥ (9)

[अव०] शास्त्रयोनित्वाधिकरणं प्रस्तौति—अथ शास्त्रयोनित्वेति ।

[मू०] अथ शास्त्रयोनित्वाधिकरणम् ।

* * * *

[अव०] अत्र हि, "एकदेशेऽनुवादत्वं बाधश्चांशान्तरे गिराम्" इत्येवं प्रत्यवस्थाने वक्तव्यं किञ्चिदुत्तरमिति निमित्तस्य च कर्तुरनुमानसिद्धत्वात्तदंशेऽनु-वादत्वं निमित्तोपादानयोर्भिथो भेददर्शनान्निमित्तस्योपादानत्वं बाधितमिति शङ्कायाम्, कर्तुरनुमानसिद्धौ विशेणविरोधात्, अत्यन्तातीन्द्रियेऽर्थे श्रुतेरेव प्रमाणत्वात्, ऊर्णनाभादौ तयोरैक्यस्य दृष्टत्वाच्च निमित्तोपादानश्रुत्योर्नानु-वादत्वबाधाविति, मानान्तरेण ब्रह्मसिद्धिर्निराकृता । तच्छङ्कापरिहारौ पञ्चभिः श्लोकैराह कार्यत्वादित्यादिभिः । —

[मू०] कार्यत्वाद्धटवत्सकर्तृ विमतं क्षित्यादिकार्यं च त-
त्सर्वं सावयवत्वतस्स भगवानाधारसिद्धान्ततः ।
इत्येतन्न घटेत विश्वजनने यत्कर्तृकालैक्ययोः
कार्यत्वव्यभिचारिभेदगणनाहेतोर्विरोधोऽथवा ॥ (10)

[व्या०] नैयायिकोऽत्र पूर्वपक्षी सर्वकर्तारमनुमानेन साधयति । विमतं—विवादा-ध्यासितम् । क्षित्यादि—क्षितिः=मही, आदिपदेन—महीधरादिपरिग्रहः । नानाव्यक्त्यनुगमकं विमतपदम् । खातपूरणादिनिष्पाद्यसंप्रतिपन्नांशव्यवच्छेद-परं वा । सकर्तृ-उपादानाभिज्ञसमर्थकर्तृकम् । कार्यत्वात् कृतिजन्य-

त्वात् । **घटवदिति** । सकर्त्रीति कप्प्रत्ययविरहस्समासान्तविधिरनित्य इति शाब्दिकोक्तेः । एवं कार्यत्वहेतुना क्षित्यादेस्सकर्तृकत्वं साधितम् । अथ हेतोस्स्वरूपासिद्धिं व्युदस्यति । **कार्यं चेति**—तत् क्षित्यादिकं, **कार्यं सावयवत्वतः**—अवयवारब्धत्वात्, घटवदित्यनुषज्यते । **चकारेण,** महत्त्वे सति क्रियावत्त्वं, महत्त्वे सति मूर्तत्वं च हेत्वन्तरं गृह्यते । ननु भवतु कर्तुस्सिद्धिः, ईश्वरसिद्धेः किमायातम् इत्यत्राह—**स भगवानिति । सः**—कर्ता, **भगवान्**—नित्यज्ञानादिमानीश्वरस्सिध्यति । कुत इत्यत्राह—**आधारसिद्धान्ततः**—अधिकरणसिद्धान्ताद्धेतोः, पक्षधर्मताबलात् नित्यज्ञानादिसिद्धिरित्यर्थः । आधारसिद्धान्तो नाम, सिद्धान्तपदार्थप्रभेदः । सर्वतन्त्रप्रतितन्त्राभ्युपगमाधारसिद्धान्तभेदाच्चतुर्धा सिद्धान्त इत्युक्तत्वात् । तत्र त्रय्यन्तविदां सिद्धान्तत्रयमभिमतम् । वैशेषिकस्य तु तुरीयोऽपि । तदुक्तं न्यायपरिशुद्धौ "त्रिविधस्सर्वतन्त्रप्रतितन्त्राभ्युपगमसिद्धान्तभेदात्" इति । "केचित्तु—कस्यचित्साधनेऽनुषङ्गसिद्धोऽन्य इति चतुर्धा विभागमाहुः । यथा क्षित्यादेस्सकर्तृकत्वसिद्धावीश्वरसिद्धिरित्यादि" इति च । एवं पूर्वपक्षमुपन्यस्य दूषयितुमुपक्रमते—**इत्येतदित्यादिना । इत्येतत्**—उक्तप्रकारेण कार्यत्वात्कर्तुरनुमानम् । **न घटेत**—न घटनार्हम् । कुत इत्यत्राह—**यदित्यादि । यत्**—यस्मात् । **विश्वजनने** क्षित्यादिकार्याणामुत्पत्तौ । **कर्तृकालैक्ययोः**—एकेन निर्मितत्वरूपकर्त्रैक्ये, एकदा निर्मितत्वरूपकालैक्ये च । **कार्यत्वव्यभिचारिभेदगणना**—कार्यत्वरूपहेतोः, व्यभिचारिभेदयोस्साधारणासाधारणानैकान्त्ययोः, **गणना**—द्वित्वेनेयत्तानिर्णयः । कार्यत्वमित्यपि पठ्यते । तदा कार्यत्वं व्यभिचारीत्यन्वयः । **भेदगणनादिति** च पाठः । भेददर्शनादित्यर्थः । इदं च विरोधेऽन्वेति । अथवा **हेतोः**—कार्यत्वस्य । **विरोधः**—अनभिमतबहुत्वसाधकत्वम् । तत एतन्न घटेतेति पूर्वेणान्वयः ।

अयमर्थः—कार्यत्वेन कर्तुरनुमितावपि एकत्वं न सिध्यति, प्रमाणाभावात् । न च कार्यत्वमेव प्रमाणम् । विकल्पासहत्वात् । किं कार्यत्वमात्रं, उतासंभावितजीवकर्तृकं पक्षासाधारणं कार्यत्वं, किं वा विपुलकार्यत्वम् । प्रथमे साधारणानैकान्त्यं, द्वितीये त्वसाधारणानैकान्त्यं, तृतीये विपुलकार्येषु कालदैर्घ्यकर्तृबहुत्वदर्शनाद्विरुद्धत्वं इति । अथवेत्युक्तेस्तृतीयशिरस्यप्यनैकान्त्यमिति सूच्यते । एककर्तृकत्वविरहेऽपि विपुलकार्यत्वदर्शनात् । तदाहुर्व्यासपादाः—"यद्वा नैकान्त्यम्" इति ॥ (10)

[अव०] अस्तु लाघवादेकत्वसिद्धिरित्यत्राह—[यदित्यादि]

[मू०] यत्कल्पनालघिमलालसमानसानां
कर्तैक्यसिद्धिरिति नादरणीयमेतत् ।
तद्व्याप्तिमेव हि रुणद्धि सकर्तृकत्वं
किं कल्प्यते लघिमसंपदमीप्समानैः ॥ (११)

[व्या०] कल्पनालघिम्नि—कल्पनालाघवतर्के, लालसा—महानभिलाषो यस्य तत्तथोक्तं मानसं येषां तेषां नैयायिकानाम् । कर्तुरैक्यस्य—एकत्वस्य सिद्धिः—लाघवतर्कसहकारेण कर्तृविषयकानुमितिविषयत्वमिति । यत्—मतम् । एतन्नादरणीयम्—तत्सिद्धान्तस्थैरप्यनादरणीयम् । हि यस्मात् । तत्—लाघवम् । तदिति, लाघवसामान्यं परामृश्यते । तल्लाघवम् कर्तृव्याप्तिमेव—कार्यत्वकर्तृजन्यत्वयोः व्याप्तिमेव । रुणद्धि—(न ग्राह्यति) । लघिमसंपदं—लाघवतर्काख्यसंपदम् । ईप्समानैः—आप्तुमिच्छुभिः । सकर्तृकत्वं, किं कल्प्यते—कथं साध्यते । बहुकर्तृकत्वगौरवप्रहाणेन एककर्तृत्वे लाघवलाभवत् तस्यापि प्रहाणेन लाघवलाभे संभवति कथं स हीयते, श्रेयसि केन तृप्यत इति न्यायादित्यर्थः ॥

अयं भावः—क्वचित् समवाय्यसमवायिनिमित्तरूपकारणत्रयसापेक्षोत्पत्तिकत्वदर्शनात्, क्वचिच्च निमित्तमात्रापेक्षोत्पत्तिकत्वदर्शनात्, कार्यमात्रे, कारणेयत्तानियमादर्शनेन, अन्यत्र कार्योपधायककारणसंख्यापेक्षया स्वल्पसंख्याककारणैरेव कार्योदयस्य लाघवपक्षपातिन्या बुद्धेस्स्वतो लिप्सितत्वेन, अङ्कुरादौ कर्तुरदर्शनेन च, तमन्तरेणैवादृष्टसमवहितैस्तैरेव हेतुभिः कार्योदयनिश्चयसंभवेन, कर्तृत्वकार्यत्वाभ्यां कार्यकारणभावासिद्ध्या कार्यत्वसकर्तृकत्वयोर्व्याप्त्यसिद्धिः । किंच घटादिकार्येषु घटत्वादिजात्यवच्छेदकलाघवमूलकतया नानाकार्यकारणभावस्यैव प्रामाणिकतया तुल्यशरीरतायामेव सामान्यविशेषन्यायावतारेण कर्तृत्वकार्यत्वाभ्यां कार्यकारणभावासिद्ध्या, नोक्तव्याप्तिसिद्धिरिति ।

उक्तं च न्यायपरिशुद्धौ "तुल्यं सर्ववित्कर्तृपूर्वकत्वसाधनेऽपि तमन्तरेणापि-तैस्तैरेव हेतुभिरदृष्टसहकृतैस्तत्तत्कार्योदयसंभवात्" इति । शारीरकसारेऽप्युक्तं "लाघवास्या-

दकर्तृकम्" इति । व्याप्तिमेवेत्येवकारेण, "वृद्धिमिच्छतो मूलहानिः" इति न्यायस्सूचितः । लघिमसंपदित्युक्त्या चाणिमाद्यन्तर्भूतलघिमाख्यसंपत्प्रतीतेः पाशुपतनिरासोऽप्यत्र गम्यते । तेऽपि ह्यनुमानेनेश्वरं साधयन्ति । अत एव तन्निरासकसौत्रयुक्तीनामत्राकृष्य भाष्येऽप्युपन्यास इति ध्येयम् ॥ (11)

* * * *

[अव०] घटादौ दृष्टानुसारेण क्षित्यादेस्सकर्तृकत्वसाधने, तद्वदेव सत्त्वादिगुणयुक्तकर्मवश्यशरीरिकर्तृकत्वसिद्धिप्रसङ्गः; क्षित्यादेर्युगपदुत्पत्तिलयासिद्धिप्रसङ्गश्च । यदि दृष्टानुगुण्यानादरः; तर्हि क्षित्यादेस्सावयवत्वेऽपि नित्यत्वादिकं कल्प्यताम् । अथ दर्शनानुगुण्यविरहपराहतं तदिति चेत्कर्तुरपि सत्त्वादिगुणविरहादिकं दर्शनानुगुण्यविरहपराहतमिति नानुमानादीश्वरसिद्धिरिति । इममर्थं संग्रहविस्ताराभ्यां श्लोकत्रयेणाह—[क्ष्मादावित्यादि]

[मू०] क्ष्मादावंशिनि कारणान्तरगणे यत्नेऽप्यदृष्टे तनौ
पक्षे दृष्टविरूपतास्त्वपरधा कल्प्या न कर्तर्यपि ।
सेयं न्यायपथप्रहीणयुगपत्सर्गक्षयौ नेक्षितौ
सर्वस्येह न कल्पनापरिकरस्तन्नानुमेयः परः ॥ (12)

[व्या०] क्ष्मादौ—महीमहीधरादौ । अंशिनि—सावयवे वस्तुनि, पक्षे । कारणान्तरगणे—अङ्कुरादिनिरूपितकारणसमूहात्मके, पक्षे । यत्ने—यत्नात्मके, पक्षे । अदृष्टे—अदृष्टात्मके, पक्षे । तनावपि—शरीरात्मके पक्षे च । दृष्टविरूपतास्तु—उत्तरश्लोके वक्ष्यमाणप्रकारेण नित्यत्वकर्तृनिरपेक्षव्यापारकत्वज्ञानचिकीर्षानिरपेक्षत्वकार्यविधानसमर्थत्वम् । विप्रकृष्टत्वादृश्यत्वादिकल्पनादिभिः दर्शनानुगुण्यप्रहाणमापतति । अपरधा—दृष्टवैरूप्यस्य जिहासितत्वे । कर्तर्यपि—कार्यत्वहेतुना सिषाधयिषिते कर्तर्यपि । सेयं—दृष्टविरूपता, सत्त्वादिगुणाद्यंशे दर्शनानुगुण्यप्रहाणम् । न कल्प्या—न कल्पनीयम् । किं च सर्वस्य—क्षित्यादेः कार्यजातस्य । न्यायपथप्रहीणौ—अनुमानसरणेर्भ्रष्टौ अनुमानाविषयभूतौ, श्रुत्यैकसमधिगम्यौ । युगपत्सर्गक्षयौ—एककालसृष्टिसंहारौ । नेक्षितौ—न दृष्टौ । दृष्टानुगुण्यानुसरणे तयोः

क्रमिकत्वप्रसंगः । तदभावे दृष्टवैरूपस्य प्रसंगश्च । इह—ईश्वरादिविषये । कल्पनायाः—अनुमितेः, परिकरः—सामग्री । ( नास्तीति यत् । [नेत्यर्थः] तत्—तस्मात् । परः—सर्वकर्ता । नानुमेयः—अनुमानेन न सिध्यतीत्यर्थः ॥ (12)

* * * *

[ अव० ] संग्रहेणोक्तं विस्तरेण द्वाभ्यामाह—नित्यं क्षित्यादीत्यादिना, दृष्टानुगुण्येत्यादिना च—

[ सू० ] नित्यं क्षित्यादि सांशं भवदपि घटतां कारणानां परेषां
व्यापारः कर्त्रपेक्षाविधुर इति भवत्वस्य कर्तुः प्रयत्ने ।
नापेक्ष्ये धीचिकीर्षे तनुभृत इह चादृष्टमीष्टे विधातुं
कार्यं देही दवीयानपि सृजतु जगद्वर्ष्म दृश्येतरद्वा ॥ (13)

[ व्या० ] सांशं भवदपि—सावयवमपि । क्षित्यादि, नित्यं घटतां—नित्यं स्यात् । प्रसिद्धकर्तृकभिन्नत्वादिति शेषः । सावयवत्वमस्तु कार्यत्वं मास्त्वित्यप्रयोजकत्वं वा । परेषां कारणानां—क्षित्यादिजनकहेतूनाम् । परत्वमिह घटादिकारणापेक्षया । व्यापारः कर्त्रपेक्षाविधुर इति भवतु—कर्तृनिरपेक्षकार्योत्पादक इति भवतु । कारणत्वमस्तु कर्तृसापेक्षितत्वं मास्त्वित्यप्रयोजकत्वम् । पूर्वतरश्लोकोक्तलाघवतर्कोद्भेदम् । अस्य कर्तुः, प्रयत्ने—यत्नोत्पत्तौ । धीचिकीर्षे—ज्ञानमिच्छा च । नापेक्ष्ये—न कारणं भवतु । लाघवादिति शेषः । इह—ईश्वरानुमाने । तनुभृतः—क्षेत्रज्ञस्य अदृष्टं कार्यं विधातुं, ईष्ट इति—समर्थमिति । भवतु—प्रतितर्को भवत्वित्यर्थः । अचेतनत्वाच्चेतनाधिष्ठितावेव धर्माधर्मौ कार्यकरौ वासिवदित्यनुपपन्नम् ; ईश्वरज्ञानप्रयत्नादौ व्यभिचारादिति भावः । देही—शरीरी, क्षेत्रज्ञः । दवीयानपि—अत्यन्तविप्रकृष्टोऽपि । दूरशब्दादियसुनि द्वादेशः । जगत्—अङ्कुरादिकम् । सृजतु—संकल्पादिना [सृजतु] । विषादिहरणवत्तदुपपत्तिरिति भावः । [वा] यद्वा वर्ष्म—शरीरं, स्रष्टृश्शरीरम् । दृश्येतरत्, अस्तु—पिशाचसिद्धादिशरीरवददृश्यमस्तु । न तावता योग्यानुपलब्धिरिति भावः ॥ (13)

* * * *

[मू० ] दृष्टानुगुण्यविरहादिह कल्पनाना-
मासामसिद्धिरिति चेदपि कर्तरि स्यात् ॥
जन्मक्रमेण ददृशे जगतः क्षयो वा
क्लृप्तिश्च दर्शनवशादनयोस्तथा स्यात् ॥ (14)

[व्या० ] [इह—पूर्वोक्तक्षित्यादिनित्यतादिविषये ] दृष्टानुगुण्यविरहात्—दर्शनानुसाराभावात्, प्रत्यक्षविरोधादित्यर्थः । आसां कल्पनानाम्—अनुमितीनां, तर्काणां वा । असिद्धिः—व्याप्त्यभावादिना अनुत्पत्तिः, अप्रामाण्यं वा । भवति चेत् । कर्तर्यपि—सिषाधयिषिते कर्तरि च । असिद्धिः स्यात्—सत्त्वादिशून्यत्वाकर्मवश्यत्वादिविषयकानुमित्यसिद्धिः स्यात् । किंच, जगतः, जन्म—उत्पत्तिः । क्रमेण ददृशे दृष्टम् । दृशेः कर्मणि लिट् । जगत इति घटादिकं विवक्षितम् । क्षयो वा—लयश्च । क्रमेण ददृशे । अनयोः— जगज्जन्मक्षययोः । क्लृप्तिः—अनुमितिः । तथा स्यात्—क्रमविषयिणी स्यात् । न [चा](वा)स्माकं तदभिमतमित्यर्थः ॥ (14)

* * * *

[मू० ] [अथ समन्वयाधिकरणम् ] ।

[अव० ] समन्वयाधिकरणं प्रस्तौति (तत्तु समन्वयादिति) । तत्र सिद्धरूपस्य ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेण बुभुत्सितग्राहकशास्त्रप्रतिपाद्यत्वं न संभवतीत्याशंक्य स्वतः पुरुषार्थभूतस्य अनवधिकातिशयानन्दरूपस्य ब्रह्मणः शास्त्रप्रतिपाद्यत्वं संभवतीति समर्थ्यते । तदाह—[ धिगित्यादि ]

[मू० ] धिक् कौमारिलदर्शनव्यसनिनः प्राभाकरप्रक्रिया-
विक्रन्तानपि हन्त नाथविधुरं विश्वं जगज्जल्पतः ।
दूरे कारणदोषबाधकधियोर्नाथे पुमर्थे स्वतः
प्रामाण्यं न कथं भजन्ति विधिवन्मन्त्रार्थवादोक्तयः ॥ (15)

[व्या० ] कौमारिलदर्शने—भाट्टप्रक्रियायां, व्यसनिनः—दुर्निर्वाहार्थनिर्वहणपरिश्रमशालिनः । धिक्—ते निन्द्याः । प्राभाकरप्रक्रियायां, विक्रान्तानपि निर्विघातगतीनपि । धिक्—ते पि निन्द्याः । कुत इत्यत्राह— विश्वं

जगत्, नाथविधुरं—अनाथम्। जल्पतः—असंगतभाषणेन ब्रुवतः। प्रवृत्तिनिवृत्तिपरतयैव शास्त्रस्य प्रामाण्याद्ब्रह्मणश्चातद्रूपत्वान्न तस्य शास्त्रप्रतिपाद्यत्वम्; वेदान्तास्तु कर्मसु कर्तृभूतात्मप्रतिपादनेन कर्मविधिशेषतयैव प्रामाण्यं भजन्त इति तैरुक्तम्। तद्दूषति—धिगिति।

तेषामुभयेषामपि अभ्युपगमान्तरेषु मिथो विरोधे सत्यपि ईश्वरापलापे कथं संवाद इति उपालम्भो 'हन्त' इत्यनेन व्यज्यते। क्षणभङ्गिनः कर्मणो भाविस्वर्गसाधनत्वानुपपत्त्याऽपूर्वं कल्पयन्तः, कथमचेतनस्य तस्य फलप्रदत्वानुपपत्त्या नेश्वरं कल्पयन्ति; श्रुतं वा तदपलपन्ति; कथं वा।

" आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः॥"

इत्युक्तरीत्या प्रथममनन्यार्थतया प्रतिपन्नस्य कार्यस्य तन्निर्वाहाय स्वर्गाद्यर्थत्वं वदन्तः, सर्वप्रधानं सर्वशेषिणं सर्ववेदान्तवेद्यं जगन्नाथमपलपन्तीति, जल्पत इति पदेन व्यज्यते।

सिद्धान्तमाह—दूर इति। कारणदोषस्य—भ्रमप्रमादविप्रलम्भात्मककारणदोषस्य, बाधकधियः—नेदमितिबाधबुद्धेश्च। दूरे—विप्रकृष्टाः। मन्त्राः[1] मन्त्रणादिलक्षणलक्षिताः, मन्त्रत्वेन प्रसिद्धा वा, अर्थवादाः—पुराकल्पसरूपा भूतार्थप्रतिपादकांशाः, उक्तयः—एवंरूपवेदान्तवाक्यानि 'सत्यं ज्ञानं' 'सदेव सोम्य' इत्यादीनि। विधिवत्—विधिनातुल्यम्। इदं पूर्वोत्तरान्वयि। स्वतः पुमर्थे—पुरुषार्थसाधनत्वेन विनापि पुरुषार्थभूते। नाथे—जगच्छेषिणि। प्रामाण्यं कथं न भजन्ति। भजन्त्येवेत्यर्थः॥

'तव गृहे निधिरस्ति' इति वाक्यस्येवानवधिकातिशयानन्दरूपब्रह्मप्रतिपादकस्य वेदान्तस्य पुरुषार्थपरत्वात्प्रामाण्यं निर्बाधम्। विधेरपि पुरुषार्थपरत्वेनैव हि प्रामाण्यम्। न चार्थसत्यत्वानिश्चयः। नित्यनिर्दोषापौरुषेयत्वसाम्याद्विधिवदेव तन्निश्चयात्। स्वतः पुमर्थ इति प्रवृत्तिनिवृत्तिव्यावृत्तिरुच्यते। पुरुषार्थसाधनत्वेन हि तयोः शास्त्रविषयत्वम्।

1 पा० उक्तमन्त्रणादि-

पुरुषार्थरूपतया तु शास्त्रविषयत्वं कैमुतिकन्यायसिद्धम् । किंच, विध्यपेक्षितफलतयां फलप्रदत्वेन च ब्रह्मणः शास्त्रप्रतिपाद्यत्वं निर्बाधमिति पुमर्थे नाथ इत्यभ्यां सूचितम् ॥ (15)

*  *  *  *

[अव०] एवं चतुस्सूत्री व्याख्याता । सा हि शास्त्रारम्भसिद्ध्यर्था । 'ईक्षतेर्नाशब्दम्' इत्यादि च शास्त्रम् । तत्र ईक्षत्यधिकरणाद्यर्थानां भाष्यादिषु स्फुटतरत्वादस्फुटार्थानां केषांचित् स्फुटप्रतिपत्तये (तत्र श्लोकादुच्यन्ते) [श्लोका उच्यन्ते] । तत्र च ईक्षत्यधिकरणगुणसूत्रे 'प्रतिज्ञाविरोधात्' इत्यत्र विषयभूतस्यादेशशब्दस्य परोक्तमर्थं प्रतिक्षिपन् स्वसिद्धान्ताभिमतमाह द्वाभ्याम्—तत्र परोक्तमर्थमनुवदति प्रथमेन—

[मू०] छान्दोग्ये केचिदाहुर्दिशतिरुततमादेशमप्राक्ष्य इत्य-
त्राङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्तिं घञन्तः ।
नो कर्तर्यस्ति कर्मण्यगणि घञिहसत्कर्तृशास्तौ न कर्म
स्यात्स्यात्कर्मोपदेशे तदिदमुदितमादेशवाचोपदेश्यम् ॥ (16)

[व्या०] केचिदाहुः—मृषावादिनो वदन्ति । किमित्यत्राह—छान्दोग्य इत्यादि । छान्दोग्ये—छन्दोगानामाम्नाये । 'छन्दोगौक्थिक-'इत्यादिना ञ्यप्रत्ययः । उत तमादेशमप्राक्ष्य इत्यत्र, आङ्पूर्वः, घञन्तस्तु घञ्प्रत्ययान्तश्च । दिशतिः धातुः । सतः—सद्विद्यास्थसच्छब्दवाच्यब्रह्मणः । उपदेशं—तत्कर्मकमज्ञातज्ञापनम् । प्रकटयति—प्रतिपादयति । प्रशास्तिं—प्रशासनम् । बाहुळकाच्छासेश्शास्तिः राजदण्ड इति वैयाकरणाः । "[1] यमो वैवस्वतो राजा" इति भगवन्नियमनमपि हि राजदण्डः । न प्रकटयति । कुत इत्यत्राह—घञन्त इति । इदं च हेत्वर्थगर्भम् । तदाह—नो कर्तरीतिं । घञ्प्रत्ययः कर्तरि नास्ति, [2] "अकर्तरि च" इत्युक्तेः । घञ्कर्मण्यगणि—कर्मार्थे विहितः कारक इत्युक्तेः । यद्यपि संज्ञायामित्युक्तेः कर्मण्यसंज्ञायां घञ्दुर्लभः; तथापि

---

1 मनुस्मृति. अ. ८-९२.
2 पा. अ. ३-३-१९.

बहुलग्रहणादसंज्ञायामपि घञ् सुलभः । को भवता लाभो लब्धः । अपरं लाभं स्वाभिधेयापेक्षाविधिनियमस्संबन्धमनुवर्तिष्यते एकः पाकः पुटपाकप्रतीकाश इत्यादिप्रयोगात् । इह—बुद्धिस्थभवत्पक्षे । सत्—सच्छब्दवाच्यं ब्रह्म । शास्तौ—शासने । कर्तृ स्यात्—कर्तृत्वार्हम् । कर्म न स्यात्—कर्मत्वानर्हम् । [1] "न तस्येशे कुतश्चन" इति श्रुतेरित्यर्थः । तत्—तस्मात् । आङुपसृष्ट-दिशतेरुपदेशेऽपि प्रयोगात्, घञः कर्मणि प्रयोगप्राचुर्यात्, प्रशासनार्थकत्वे ब्रह्मणः प्रशासनकर्मत्वविरहात्, घञ्प्रत्ययस्य च कर्तरि विधानाभावादुपदेश्यत्वस्य च ब्रह्मण्युपपत्तेश्चेत्यर्थः । इदं—सच्छब्दवाच्यं ब्रह्म । आदेशवाचा—"तमादेशम्" इत्यादेशशब्देन । उपदेश्यमुदितं—उपदेश्यत्वेनोक्तमिति केचिदाहुरिति पूर्वेणान्वयः ॥ (16)

*  *  *  *

[अव० ] तमिममर्थं प्रतिक्षिपन् स्वाभिमतार्थमाह—

[मू० ] अत्र ब्रूमः प्रशास्तिं वदति दिशिरसावाङ्मुखो नोपदेशं
शास्तौ सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसंगः ।
युक्तोऽसाधारणोक्त्या घञगणिकरणेऽप्यत्र वैवक्षिकत्वं
शाब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा ॥ (17)

[व्या० ] [अत्रेत्यादि] अत्र ब्रूमः—अस्मिन् पूर्वपक्षे सिद्धान्तं ब्रूमः । किमित्यत्राह—प्रशास्तिमित्यादि । आङ्मुखः—आङ्पूर्वकः । असौ दिशिः—दिशिधातुः । प्रशास्तिं—प्रशासनम्, आज्ञाम् । वदति—प्रतिपादयति । असावाङ्पूर्वो दिशिधातुः, उपदेशं न वदति—उपदेशं न बोधयति । कुत इत्यत्राह—शास्तौ सोऽतिप्रसिद्ध इति । स आङ्पूर्वो दिशिः प्रशासने अतिप्रसिद्ध इत्यर्थः । "आङ्पूर्वो दिशिः नियोक्तृप्रयोजनवचनः, उपपूर्वस्तु नियोज्य-प्रयोजनवचनः" इति न्यासकारोक्तिः । "आदिष्टोऽसि" "अदिष्टा रघुपुङ्गवेन" इत्यादिप्रयोगाच्चेत्याशयः । न हि पर इति । परे—उपदेशे सः—आदेशशब्दः, न हि प्रसिद्धः । (तस्योपदेशत्वप्रसिद्धिः प्रसिद्धे-त्यर्थः) । "एष आदेश एष उपदेशः" इति पृथङ्निर्देशादिति भावः ।

---

1 कश्चन. २.

किं च इह—प्रशासितृत्वार्थकत्वे । अपेक्षितार्थप्रसंगः—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धयर्थं निमित्तान्तरव्युदासायोपादानस्यैव निमित्तत्वाभिधानमपेक्षितमित्यपेक्षितार्थसिद्धिर्भवति । असाधारणस्य—परमात्मासाधारणस्य प्रशासितृत्वस्य, उक्त्या—प्रतिपादनेनायमादेशशब्दः प्रशासने युक्तो भवति । प्रष्टव्यत्वोक्त्यैवार्थादुपदेश्यत्वं सिद्धमिति तदुक्तिरनपेक्षितकथनं स्यात्; संसारनिवृत्तिब्रह्मतदुपासनानामुपदेश्यत्वं साधारणमिति तदुक्तिस्साधारणोक्तिश्च स्यादिति भावः । करणेऽपि, घञ्—घञ्प्रत्ययः । अगणि—विहितः । 'उपदेशेऽजनुनासिकः' इत्यत्र 'हलश्च' इत्यसंज्ञायामपि 'बहुलग्रहणात्करणे घञ्'इति महाभाष्योक्तेरिति भावः । कारकाणां—कर्मादीनाम् । वैवक्षिकत्वं--विवक्षाधीनतत्तत्कारकभावम् । शाब्दैः—वैयाकरणैः, उक्तम् । 'विवक्षातः कारकविभक्तयो नानाभवन्ति' इति तैरुक्तेरिति भावः । नन्वित्यवधारणे । कर्तरि करणतया विवक्षा कारणत्वप्रकारकबोधनेच्छा । स्यादेव । अकर्तरीति पर्युदासस्तुकर्तृत्वप्रकारकबोधतात्पर्ये घञ्प्रत्ययस्य असाधुत्वबोधनार्थ इति भावः ॥

तदाहुर्व्यासपादाः उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यं च । प्रशासनपक्षेतु प्रत्ययास्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम्; अतः प्रशासितैवादेशशब्दाभिधेय इति स्वीकर्तुं युक्त इति । अत्र वस्तुतः कर्तर्येव कर्तृत्वस्य साधकतमत्वरूपकरणत्वस्य च सत्त्वात् कर्तृत्वाविवक्षया करणत्वमात्रविवक्षायां तत्प्रत्ययः सुलभः । यथा घटादौ घटत्वद्रव्यत्वादेर्विवक्षानुसारेण घटादिपदप्रयोगः तद्वदिति, 'विवक्षातः कारकविभक्तयः' इत्यत्रारोपप्रसक्त्यभावाच्च तत्परिहाराय घञः कर्तरि लक्षणा । करणादेः कर्तृत्वविवक्षापि नारोपरूपेति समभिव्याहृततत्क्रियाकारकान्तरानधीनतत्क्रियानुकूलव्यापारवत्त्वं स्वातन्त्र्यमिति परिष्कुर्वद्भिस्तान्त्रिकैरुक्तम् । न चैवं प्रत्ययास्वारस्याभ्युपगमविरोध इति वाच्यम् । प्रशासनोपदेशयोः प्रयोगे सत्यपि प्रसिद्धिप्राचुर्यात् प्रशासने स्वारस्यं तद्विरहाच्चोपदेशे प्रकृतेरस्वारस्यमितिवत् घञः कर्मकरणयोः प्रयोगेऽपि कर्मणि प्रसिद्धिप्राचुर्यात्स्वारस्यं, करणे तु तद्विरहादस्वारस्यमित्यदोषात् । न चप्रशासनकरणत्वस्य परमात्मतज्ज्ञानसाधारण्याच्चासाधारण्यमिति वाच्यम् । तथाप्युपदेश्यत्वापेक्षयास्यासाधारण्यात् करणान्तरनैरपेक्ष्येण प्रशासनकर्तृत्वे सति प्रशासनकरणत्वस्यासाधारण्याक्षतेश्च । यद्यपि कर्मण्यपि घञ्दुर्लभः तद्विधौ 'संज्ञायाम्' इमित्युक्तेः; तथा चोपदेशपक्षेऽपि प्रत्ययस्वारस्याभावस्तुल्यः; तथापि प्रसिद्धिप्राचुर्यतद्विरहाभ्यां स्वारस्यास्वारस्ये निर्बाधे । न चैवं बाहुलकात्कर्तर्येव घञाश्रीयतामिति वाच्यम् । कर्मकरणयोः

संज्ञायामपि बहुळग्रहणात् , घञुपपादनवत् कर्तरि घञो बाहुळकतया महाभाष्यकारैरनुपपादनात् । न च कारकान्तराणां कर्तृत्वविवक्षोचिता, न तु कर्तुः कारकान्तरविवक्षेति वाच्यम् । "आत्मानमात्मना वेत्सि सृजस्यत्मानमात्मना" इत्यादौ कर्तुः करणत्वविवक्षेत्युक्तत्वात् ; 'लूयते केदारः स्वयम्' इत्यादौ कर्मकर्तुरपि करणत्वविवक्षाकथनात् , "प्रेषिते च किलायं क्रियामक्रियां च दृष्ट्वा" इति भाष्यव्याख्याने कर्तुरधिकरणत्वविवक्षया सप्तमीति कैयटेनोक्तत्वाच्च ॥

* * * *

[ अव॰ ] आनन्दमयाधिकरणे पुच्छब्रह्मणः प्राधान्यं परोक्तमनुवदति—[षष्ठयेत्यादि]

[ मू॰ ] षष्ठ्यान्यत्वमवेदि नैनमवदच्छ्लोको न चाज्ञातता
ज्ञातस्यास्य तथापि नावयविता तस्यान्य आत्मा श्रुतः ।
शोध्यत्वं च विकारवाचकवचस्तद्ब्रह्मपुच्छं भवे-
न्न त्वानन्दमयः स चान्नमयवत् कोशो बहिः कथ्यते ॥ (18)

[ व्या ] अस्य—आनन्दमयस्य । षष्ठया—"तस्य पुच्छम्" इति षष्ठया । अन्यत्वं—ब्रह्मान्यत्वम् । अवेदि—श्रोतृभिरज्ञायि, व्यतिरेकषष्ठीस्वारस्यादिति भावः । एनं— पूर्वं ब्रह्मान्यत्व(प्रतियोगित्वे)[नियोगित्वे]नोपात्तमिममानन्दमयम् । श्लोकः—"असन्नेव स भवति" इति ब्रह्मविषयश्लोकः । नावदत्—न प्रतिपादयामास, अपि तु पुच्छतयोक्तं ब्रह्मैवावददित्यर्थः । ज्ञातस्य—प्रियमोदादिरूपेण लोकविदितस्यानन्दमयस्य, अस्य । अज्ञातता—(सद्भावासद्भाव[1] ज्ञानांशकौ) [अब्रह्मविदोऽसद्भाव] प्रयोजकमज्ञातत्वं न—न भवतीत्यर्थः । तथापि—यथाकथंचिदज्ञातत्वोपपादनेऽपि । तस्य—निरवयवस्यपरमात्मनः । अवयविता—शिरःपुच्छाद्यवयववत्ता । न—न भवतीत्यर्थः । तथा च ज्ञातोऽवयवी च आनन्दमयो न परमात्मेत्यर्थः । तस्य आन्नदमयस्य अन्य आत्मा श्रुतः—"तस्यैष एव शारीर आत्मा" इत्यात्मान्तरं श्रुतम् । परमात्मनोऽप्या[ह्या]त्मान्तरासंभवादात्मान्तरवानानन्दमयो न परमात्मेत्यर्थः । अस्य—अनन्दमयस्य । शोध्यत्वं श्रुतं—'आनन्दमयो मे शुध्यन्ताम्" इति वाक्यावगतमित्यर्थः । श्रुत इत्यनुषक्तस्य

लिङ्गविपरिणामः । नित्यशुद्धे परमात्मनि शोध्यत्वानुपपत्तेः, शोध्यत्वेन प्रतीत आनन्दमयो न परमात्मेत्यर्थः । अस्यानन्दमयस्य, विकार-वाचकवचः—विकारत्वबोधकमयट्प्रत्ययरूपशब्दः । श्रुतमित्यनुषज्यते । परमात्मनो विकारत्वानुपपत्तेर्विकारतया श्रुतो न परमात्मेत्यर्थः । यत एवं ततः, पुच्छं ब्रह्म तद्भवेत्—परमात्मतया प्रतिपाद्यत्वार्हं भवति । यद्वा तत्—तस्मात् पुच्छं ब्रह्म परमात्मा भवेदित्यध्याहारेणयोजना । आनन्दमयस्तु ब्रह्म न भवेत्—परमात्मत्वानर्हमित्यर्थः । स च—आनन्दमयस्तु, अन्नमयवत्—अपरमात्मभूतान्नमयादिवत् । बहिःकोशः—अन्तःस्थितपुच्छब्रह्मवस्तुनि बुद्ध्य-वतरणहेतुभूतबुद्धिविषयसंपुटरूपतया कथ्यते—श्रूयते ॥

तदाहुः—"तस्य प्रियमिति संबन्धवाचिन्या षष्ठ्या व्यतिरेकप्रतीतेः, ब्रह्मविषय-स्योपरितनश्लोकस्यानन्दमयविषयत्वाभावेन पुच्छतयोक्तब्रह्मण एव प्रधानत्वावगमात्, प्रियमोदादिरूपेण लोकविदितस्यानन्दमयस्य सद्भावासद्भावज्ञानाशङ्कानुपपत्तेः, निरवयस्य परमात्मनोऽवयवित्वानुपपत्तेः, अविकारस्य विकारत्वानुपपत्तेः, "तस्यैष एव शारीर आत्मा" इत्यात्मविषयवाक्यावगतस्यात्मान्तरस्य परमात्मतया आनन्दमयस्य परमात्म-त्वानुपपत्तेः, "अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्" इति श्रुतस्य शोध्यत्वस्य नित्यशुद्धे परमात्मनि ऽनुपपत्तेश्च नानन्दमयः परमात्मा, अपि तु पुच्छतया निर्दिष्टमेव ब्रह्म परमात्मेति पुच्छब्रह्मवादहेतुसंग्रहः" इति ॥ (18)

* * * *

[अव० ] तदिदं दूषयति—[पुँल्लिङ्गेत्यादि]

[मू० ] पुँल्लिङ्गान्तप्रधानप्रकृतपरवचोरूपणं चाप्यनन्यैः
श्लोकाः पुच्छं न चाहुः स्वरसमपि च नः सूत्रमन्योऽन्तरो न ।
षष्ठ्यादिश्चांशभावान्निरवधिकतया रूपणादानुरूप्यात्
पर्यायत्वादनन्यात्मकवचनतया पुच्छहेतुः परास्तः ॥ (19)

[व्या ] पुँल्लिङ्गान्तं, प्रधानप्रकृतपरं, वचः—"सोऽकामयत" इति वाक्यस्थः स इति शब्दः । पुँल्लिङ्गान्तेत्यनेन आनन्दमयपरत्वमावश्यमित्यभिप्रेतम् । प्रधाने-त्यनेन सर्वपर्यायसाधारणस्य "तस्यैष एव शारीर आत्मा" इत्युक्तस्य न प्रधान-

वाचिना सर्वनाम्ना परामर्शसंभव इत्यभिप्रेतम् । प्रकृतेत्यनेन "तस्माद्वा एतस्मादात्मनः" इत्यत्रात्मशब्दनिर्दिष्टस्य व्यवहितस्याव्यवहितपूर्वपरामर्शिना तेन परामर्शासंभव इत्यभिप्रेतम् । तथा च "सोऽकामयत" इत्यानन्दमयस्य कारणत्वप्रतीतेः परमात्मत्वसिद्धिरित्यर्थः । अस्मिन् प्रकरणे, अनन्यैः—स्वस्मादनतिरिक्तैः स्वावयवैः । रूपणं—शिरःपक्षादिरूपणं, दृश्यत इति शेषः । तथा च पुच्छरूपावयवत्वेन रूपिताद्ब्रह्मणोऽवयवितया रूपितस्यानन्दमयस्यानतिरेकसिद्धिरिति आनन्दमयस्य परब्रह्मत्वसिद्धिरित्यर्थः । अस्मिन् प्रकरणे, श्लोकाः—तत्तत्पर्यायस्थाः "अन्नाद्वै प्रजाः" इत्यादिश्लोकाः । पुच्छं नाहुः, अपि तु पुच्छवन्तमाहुरिति प्रकृतश्लोकोऽपि पुच्छवदानन्दमयपरः; न तु पुच्छमात्रपर इत्यर्थः । अनेन, पूर्वपक्षिणा 'नैनमवदच्छलोकः" इत्युक्तस्य हेतोः स्वरूपासिद्धिरभिप्रेता । रूपणं चाप्यनन्यैरिति तु अवयवितया रूपणमात्रं न वस्तुतोऽवयवित्वम् । अन्यथा ब्रह्मणोऽवयवत्वं प्रसज्येतेत्यवयवितेत्युक्तहेतोः स्वरूपासिद्धिरभिप्रेता । अपिच सूत्रम्—"आनान्दमयोऽभ्यासात्" इति सूत्रं, न स्वरसम् । आनन्दमयस्य परमात्मत्वं वदतामस्माकं पक्षे अनुपहतस्वारस्यकं, पुच्छब्रह्मणः परमात्मत्वे त्वस्वरसमित्यर्थः । तथा सति "ब्रह्मपुच्छमभ्यासात्" इति हि भवितव्यम् । अस्मत्पक्षे तु 'आनन्दमयो नेतरः' इति वा 'नाशब्दम्' इति वा प्रतिज्ञावक्ययोजनया आनन्दमयः परमात्मेति सिध्यति । अभ्यासादिति च सन्निहितानन्दाभ्यासादित्यर्थकतया स्वरसम् । त्वत्पक्षे तु आनन्दमयशब्दस्य लक्षणयानन्दमयवाक्यश्रुतपुच्छब्रह्मपरत्वं वक्तव्यमित्यस्वारस्यं स्पष्टम् । किंच, अन्यः अन्तरो न—"तस्माद्वा एतस्मादन्योऽन्तर आत्मा मनोमयः" इत्यादिवदस्यानन्दमयस्यान्तरात्मान्तरं न श्रुतमित्यर्थः । अन्तरात्मपरम्परोपदेशस्यानन्दमये पर्यवसानादानन्दमयः परमात्मेत्यभिप्रेतम् । 'षष्ठ्यादिः' इत्यादिशब्देनाज्ञातत्वं, मयट्श्रवणं, अवयवित्वं, शोध्यत्वं, ब्रह्मपदम्, "तस्यैष एव शारीर आत्मा" इति शारीरात्मश्रवणमित्येतेषां समुदायो गृह्यते । तत्र च क्रमेणांशभावादित्यादिकमुपपादकम् । तस्य पुच्छमिति षष्ठी, अंशभावात्—अवयवत्वात् । अवयवावयवीभावः षष्ठ्यर्थ इति भावः । अनन्यैरित्यनतिरेकः पूर्वमुक्तः । अज्ञातत्वं निरवधिकतया । प्रियादिरूपेण ज्ञातस्यापरिच्छिन्नानन्दत्वेनाज्ञातत्वमप्युपपन्नमिति भावः । मयट्श्रवणं च निरवधिकतया । प्राचुर्यार्थे मयड्विधानाद्विकारश्रवणहेतुरसिद्ध इति भावः । ज्ञातत्वहेतोरप्यसिद्धिर्निरवधिकतयेति

सूचिता। अवयवित्वं रूपणात्। न वस्तुत इत्यर्थः। अवयवित्वहेतुरसिद्ध इति भावः। अन्यथा ब्रह्मणः पुच्छत्वप्रसंगः। न च पुच्छपदेनाधारलक्षणा। रूपप्रकरणविरोधादिति हृदयम्। शोध्यत्वं आनुरूप्यात्। आनन्दमयस्य जीवत्वपक्षे संसारनिर्हरणवत् तस्य परमात्मत्वपक्षे जीवापराधजनितकालुष्यनिवृत्ति-रेव (प्रपदनाधीनस्य) अनुरूपं शोध्यत्वमित्यर्थः। अनेनानन्दमयस्यापरमात्मत्व-साधकपरोक्तशोध्यत्वहेतोरसिद्धिरभिप्रेता। पर्यायत्वात्ब्रह्मपदश्रवणम्। 'आनन्दो ब्रह्मेति व्यजानात्' 'आनन्दमयमात्मानम्' इत्यादिस्थानप्रमाणेनानन्दमयात्मब्रह्म-शब्दानामैकार्थ्ये निश्चिते सति, आनन्दमयपर्यायश्लोके 'असन्नेव स भवति' 'असद्ब्रह्म, इति ब्रह्मशब्दश्रवणमानन्दमयविषये, नानुपपन्नमित्यर्थः। अनेन पूर्वोक्तहेत्वसिद्धिर्दृढीकृता। अनन्यात्मकवचनतया शारीरात्मश्रवणम्। [प्रकान्ता](प्रकारान्तरा)त्मोपदेशपरम्पराया अस्मिन्नानन्दमये अन्योऽन्तर इत्युक्त्य-भावात् परिसमाप्त्यवगमेन, 'तस्यैष एव" इति वाक्यमनन्यात्मकत्वपरमित्यर्थः। "स्वे महिम्नि प्रतिष्ठितः" "आत्मेश्वरम्" इतिवत्। अनेनात्मान्तरवत्त्वरूपहेत्व-सिद्धिरभिप्रेता। यत एवं ततः, पुच्छहेतुः—पूर्वपक्षोक्तपुच्छब्रह्मत्वहेतुः, आनन्दमयस्याब्रह्मत्वहेतुरिति यावत्। जातावेकत्वम्, 'षष्ठ्यान्यत्वमवेदि, इत्याद्युक्तहेतव इत्यर्थः। परास्तः—सिद्धान्तसाधकबलवद्धेतुभिः स्वरूपासिद्ध्या च दूषिता इत्यर्थः॥ (19)

* * * *

[अव०] अन्तरादित्यधिकरणे "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्याद्यन्तरादित्य(विद्यायाम्) विषयवाक्ये] "तस्य यथा कप्यासं पुण्डरीकमेव-मक्षिणी" इति श्रूयते। अस्य वाक्यस्य षडर्था वृत्तिकृतोक्ताः, तानाह षड्भिः श्लोकैः—

[मू०] कपिस्त्वादित्यः कं पिबति किरणैरित्यपि कपि-
र्बभस्तीत्याम्नातः स कपिरमुनास्तं यदिह तत्।
प्रतीमः कप्यासं दिवसकरतेजोविकसितः
स पद्मश्रीमत्त्वादगणि भगवच्चक्षुरुपमा॥ (20)

[व्या०] कं पिबति किरणैरिति कपिरादित्यः—कं जलं, पिबतीति कपिरिति सूर्यः कपिशब्देनोच्यत इत्यर्थः। श्रौतप्रयोगमाह—अपीत्यादिना। स—

आदित्यः । कपिः बभस्तीति—'कपिर्बिभर्ति तेजनम्' इति श्रुत्या । कपिराम्नातः—कपित्वेनाभ्यस्तः, अधीतः । अपिस्समुच्चये । तेन 'कपयोऽर्के भवानराः' इति नानार्थरत्नमाला गृह्यते । इह—अस्मिन् कपिशब्दार्थे सति, यदमुना—आदित्येन । अस्तं—विकसितम् । असुक्षेपणे । कर्मणि क्तः । तत्—कर्म । कप्यासं—कप्यासशब्दवाच्यम् । प्रतीमः—निश्चिनुमः । अस्यते क्षिप्यते इत्यासम् । कर्मणि घञ् । "घञबन्तं पुंसीति प्रायिकम्" इत्युक्तेः क्लीबत्वम् । अर्थमाह—दिवसेति । सः—"कप्यासं पुण्डरीकम्" इत्युक्तः । दिवसकरतेजसा—सूर्यकिरणैः, विकसितः पद्मः—कमलं 'वा पुंसि पद्मं नळिनम्' इत्युक्तेः पुंस्त्वम् । श्रीमत्त्वात्—शोभातिशयाद्धेतोः । भगवच्चक्षुषोः—'पुण्डरीकाक्षः' इति प्रसिद्धभगवन्नेत्रयोः, उपमा—उपमानम् । अगणि—ज्ञापित इत्यर्थः । कप्यासं पुण्डरीकं यथा एवं तस्याक्षिणी इति योजना । दिवसकरकिरणविकसितपुण्डरीकसदृशे तस्य नेत्रे इत्यर्थः । अत्र, "कपिस्त्वादित्यः" इत्यादित्यशब्दनिर्देशेन, "श्रीमत्त्वात्" इति निर्देशेन च "आदित्यक्षिप्तं वा श्रीमत्त्वात्" इति वृत्तिकारवचनं स्मारितम् । 'कपिस्त्वादित्यः' इति 'तु'शब्देन, अस्य वक्ष्यमाणार्थपञ्चकव्यावृत्तिस्सूचिता ॥ (20)

* * * * *

[ अव० ] अर्थान्तरमाह—[नाळमित्यादि]

[ मू० ] नाळं कपिर्भवति कं पिबतीति तस्मिन्
यस्यास आसनमुशन्ति मनीषिणस्तत् ।
कप्यासमुज्ज्वलमुदारमिदं सरोजं
चक्षुर्निदर्शनमुदीरितमीश्वरस्य ॥ (21)

[ व्या० ] कं—जलं, पिबतीति कपिः नाळं भवति । "नाळमथास्त्रियाम्" इत्युक्तेः क्लीबत्वम् । जलपानकरणस्य तत्कर्तृत्वविवक्षा । यस्य—बुद्धिस्थस्य । तस्मिन् नाळे । आसः—आसनं, उपवेशो भवति । तत्—कर्म । मनीषिणः—पण्डिताः । कप्यासमुशन्ति—कप्यासशब्दार्थमिच्छन्ति । वशकान्तौ, कान्तिरिच्छा । कपौ नाळे आस उपवेशो यस्य तत्कप्यासं,

व्यधिकरणबहुव्रीहिः। आस उपवेशन इति पठितात् भावे घञित्यभिप्रायः। यद्वा फलितार्थकथनमिदम्। आस्ते उपविशतीत्यासम् पचादेराकृतिगणत्वादच्प्रत्ययः। कपावासं कप्यासम्। सप्तमीति योगविभागात् समासः। इदं—कप्यासशब्दोक्तम्। अत एव उज्ज्वलं—शोभातिशययुक्तम्। उदारं—स्फीतम्। "अपचितादपि पङ्कजान्नालस्थपुण्डरीकस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षित" इति व्यासपादाः। सरोजं पद्मम्। अयं च श्रुतिस्थपुण्डरीकशब्दार्थः। ईश्वरस्य—पुण्डरीकाक्षत्वज्ञाप्यनिरुपाधिकैश्वर्यशालिनो भगवतः। "तं चारुनेत्रं पुरुषं प्रधानम्" इत्युक्तेः। चक्षुर्निदर्शनं—नेत्रयोरुपमानम्। उदीरितं—उपमानत्वेनोक्तं, श्रुत्येति शेषः।

पूर्वत्रात्र च, "याभिरादित्यस्तपति ताभिः पर्जन्यो वर्षति"। "गण्डूषपेयमिव कान्त्यमृतं पिपासुरिन्दुः प्रसारितमयूखमृणालकाण्डः" इति सूर्यनाळयोस्सलिलपानकर्तृत्वप्रसिद्धेरर्थौचित्याच्च कशब्दे उपपदे पिबतेर्बाहुळकः किप्रत्ययस्समाश्रितः। अर्थान्तरेष्वपि हि आसशब्दे घञ्प्रत्ययस्य बाहुळककत्वमविशिष्टम्, अर्थौचित्यं त्वत्र विशेषः। यथा तिरोधिशब्दस्य बाहुळककिप्रत्ययान्तत्वं तथा कपिशब्दस्यापि बाहुळककिप्रत्ययान्तत्वमित्यदोषः। भगवद्गुणदर्पणे, "स्वयमपि तदनुभवसुखं पाति पिबतीति वा। इन् सर्वधातुभ्यः। आतो लोपः। कपिरव्ययः" इति भट्टपराशरपादा अनुजगृहुः। तेषामयमाशयः सर्वधातुभ्य इति सूत्रविहितस्य इन्प्रत्ययस्य गाङ्कुटादिसूत्रेण ङित्वेऽपि कोटिरित्यत्र गुणहेतुत्वं यथा बाहुळकं तथात्राकिङितोऽप्यस्यालोपप्रयोजकत्वं बाहुळकम्। अत एव 'मत्वर्थाच्च' इत्यत्र बाहुळकत्वादकारलोपेऽपि मत्वर्थीय इत्युक्तमिति। यद्यपि वैयाकरणैः 'कुङ्किकम्प्योर्नलोपश्च' इत्यत्र 'कपिः स्यात्सिंहके शाखामृगे च मधुसूदने' इति कोशो लिखितः। "प्राण एजति निस्सृतम्" "कम्पनात्" इति च श्रुतिसूत्रस्वारस्यात् कम्पयितृत्वं परमात्मनोऽवगतम्। तथा च भगवति कपिशब्दः कम्पयितृत्वनिमित्तक इति वक्तुमुचितम्; तथापि सहस्रनामाध्याये पूर्वापरनामसारस्यपर्यालोचनया सुखपातृत्वनिमित्तकत्वमेव कपिरित्यस्योचितम्, न हि वैयाकरणानामुपायेष्वाग्रहः। 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इति तैरेवोक्तत्वादित्याचार्याणामभिप्रायः। एवमेव कप्यासमित्यत्र। घ्यल्लोपसिद्ध्या "सर्वधातुभ्य इन्" इतीन् प्रत्यय एवाश्रयितुं युक्तमिति ध्येयम्। ननु उणादिव्युत्पन्नानां संज्ञात्वनियमात् कपिशब्दस्यादित्ये भगवति च श्रुतिसहस्र,

नामप्रयोगेण जलमुखपातृत्वनिमित्ततया वृत्तिसंभवेऽपि नाळे क्वापि तस्याप्रयोगेण उणादिसूत्रेण तद्व्युत्पादनं न संगच्छत इति चेन्न । उणादयो बहुळम् ' इत्यत्र संज्ञाग्रहणानुवृत्तावपि क्वचिदुणादिप्रत्ययविधौ पुनस्संज्ञाग्रहणदर्शनेन औणादिकानां प्रत्ययापां क्वचिदसंज्ञायामप्यनुमानेनादोषात् ॥ (21)

[अव०] अर्थान्तरमाह—[कमित्यादि]

[मू०] कमुदकमिह प्यासो यस्यासनं यदि वोद्भवः
कविभिरुदितं कप्यासं तद्गभीरजलोदयात् ।
शिशिरमधुरं श्रीमद्दामोदराक्षि निदर्शनं
भवति नळिनं लुप्ताकारस्त्वपिः पिहितादिवत् ॥ (22)

[व्या०] [कमुदकमिति कशब्दव्याख्यानम्] (कम्, उदकं भवति) "कं शिरोऽम्बुनोः" इति कोशात् । इह—उदके प्यासः आसनं स्थितिः यस्य तत् । यदि वा—अथवा, उद्भवः—उत्पत्तिः यस्य तत् । कप्यासं—कप्यासपदवाच्यम् । कविभिः—क्रान्तदर्शिभिः । उदितं—उक्तम् । 'केप्यासो यस्य तत्' कप्यासमिति विग्रहे, व्यधिकरणबहुव्रीहिरिति भावः । इत्थं व्युत्पत्तिः दर्शिता । अथ वाक्यार्थमाह—गभीरेत्यदिना । गभिरजलोदयात्—निम्नतमजले, उत्पत्तेर्हेतोः । इदं स्थितेरुपलक्षणम् । शिशिरमधुरं—शीतलसुन्दरम् [उपमाने शिशिरत्वाद्युक्त्या] उपमेयेऽपि तत्सिद्धेः । तापत्रयातुराणामुपासकानां सकलसन्तापहरं भगवन्नेत्रमित्यर्थः । श्रीमत्—शोभातिशययुक्तम् । अतिशायने मतुप् । नळिनं, दामोदरस्य—लोकत्रयाश्रयस्य, यशोदया बद्धस्य च भगवतः अक्ष्णोः—ऐश्वर्यवात्सल्य रक्तयोर्नेत्रयोः, निदर्शनं—उपमानम् । भवति । ननु कोऽयं प्यासो नामेत्यत्राह— लुप्तेति । अपिरुपसर्गः । [अप्युपसृष्टे आसधातौ अप्याङुपसृष्टे असधातौ वा पचाद्यचि उपदेशार्थक उत्पत्त्यर्थको वा अप्यासशब्दः । "वष्टि वागुरिरल्लोपम्" इति अपेरकारलोपे प्यासशब्दः साधुरिति भावः] (तदुपसृष्टेनासिना अप्यास इति निष्पन्नेन उत्पत्तिरुच्यते । अपिशब्दस्यत्वकारो "वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यनुशासनेन लुप्तः ।) [पिहितादिवत्]

पिहितशब्दे पिधानशब्दे च यथाकारलोपस्तथेत्यर्थः । "अब्रह्मण्याचार्यात्" इत्यापस्तम्बप्रयोगोऽप्यादिशब्दाभिप्रेतः । "अब्रह्मपि अब्रह्मापि पररूपं कतन्तवत्; अपेर्वाकारलोपः" इत्युज्ज्वला ।

उदकोत्पत्त्युक्तावपि सामर्थ्याद्गभीरत्वलाभः । अनेनोदकस्थितिवचनेन स्थलकमलव्यावृत्त्या शिशिरत्वादिलाभः । अत्र यस्यासनं यदि वोद्भव इत्यर्थद्वयमासपदस्योक्तम्; तत्र यद्यपि श्रुतप्रकाशिकायां, कं जलम् आस उपवेशन इति धातुरपिपूर्वक इत्युक्तम्; तथापि वेदार्थसंग्रहे भगवता गम्भीराम्भस्समुद्भूतेत्यभिहितम्; तद्व्याख्यायां च व्यासपादैः कम् जलम् असभुवि अपिपूर्वक इत्युक्तमिति पक्षद्वयाभिप्रायेण अर्थद्वयोक्तिरिति ध्येयम् ।

ननु 'आर्धधातुके' इत्यधिकृत्य "अस्तेर्भूः" इति सूत्रेणार्धधातुकेपरतोऽस्तेर्भ्वादेशविधानात् कप्यासमित्यत्रास्तेर्घञि पचाद्यचि वा परतो भूइत्यदेशापत्त्या कपिभावमिति स्यत्, न तु कप्यासमिति रूपमिति चेत्,—न 'अस्तेर्भूः' 'ब्रुवो वचिः' 'चक्षिङः' ख्याञ्' इति प्रकरणे, "बहुलं संज्ञाच्छन्दसोः" इति वक्तव्यमन्नवधकगात्रविचक्षणाजिराद्यर्थम्" इति वार्तिकव्याख्याने, (सर्वप्रकरणापेक्षमेतदुच्यते) "अन्नशब्दे जग्ध्यभावः, वधक इति ण्वुलि वधादेशः, गात्रमिति इण औणादिकेष्ट्रनिगादेशः, विचक्षणे ख्याञभावः, अजिरेति भावाभावः" इति कैयटग्रन्थे सर्वप्रकरणापेक्षमेतदुच्यत इत्युक्तेः । वार्तिकेऽजिराद्यर्थमिति आदिशब्दाच्च तत्प्रकरणस्थयोः अस्तिब्रूवो श्छन्दसि भूभाववच्यादेशयोरभावेन, ब्राह्मणो ब्रवणादित्यस्य, प्रकृते कप्यासमित्यस्य च सिद्धेरविघातादित्याचार्याणामभिप्रायात् । अत्र च भगवच्चक्षुरुपमा—इत्यत्र भगवच्छब्देन भगश्रीरित्यैश्वर्योक्तेः, ईश्वरस्य चक्षुर्निदर्शनमित्यत्र ऐश्वर्योक्तेश्च प्रायपाठन्यायेन दामोदरेत्यत्रापि "दामानि लोकनामानि तानि यस्योदरान्तरे । तेन दामोदरो देवः" इति निर्वचनानुसारेण ऐश्वर्यविवक्षोचिता । श्रुतं चास्यामपि विद्यायां पुण्डरीकाक्षस्य सर्वलोककामेशत्वमिति ध्येयम् (22)

*   *   *   *

[अव०] एवं सिद्धान्ताभिमतास्त्रयोऽर्था उक्ताः । अथार्थस्वभावादेव पूर्वपक्षतया निश्चितास्त्रयोऽर्था उपन्यस्य निराक्रियन्ते—[कप्यासमिति]

[मू०] कप्यासं भानुबिम्बं हरिभजनपदं हृत्सरोजं च यद्व-
त्तद्वच्चोपासकाक्षिद्वयमिति तु न सत्तत्र यत्पुण्डरीकम् ।
गौणं तस्याक्षिणी इत्युभयपदनिराकाङ्क्षतानादरेणा-
प्यध्याहारः समानाधिकृतपदगतित्यक्तिरूर्ध्वे तदुक्तिः ॥ (२४)

[व्या० ] कं पिबतीति कपिः--सूर्यः, तस्य आसं--आसनमधिकरणम् । बहुलग्रहणादधिकरणे घञ् । तत्किमित्याकाङ्क्षायामाह--भानुबिम्बमिति । सूर्यमण्डलमित्यर्थः । अत्र पुण्डरीकमित्यादिः । तथाच कप्यासपदवाच्यमादित्यमण्डलं,पुण्डरीकपदाभिप्रेतं हृत्सरोजं-च यद्वत्--यथा हरिभजनपदं--परमात्मोपासनस्थानम् । तद्वत्-तथा । उपासकस्याक्षिद्वयम् उपासनस्थानमित्ययमेकोऽर्थः । अयं नोपपद्यत इत्याह--इति तु न सदिति । अयमर्थोऽत्यन्तासमीचीन इत्यर्थः । कुत इत्यत्राह-यदित्यादि । यत्--यस्मात् । पुण्डरीकं पुण्डरीकपदम् । तत्र--पूर्वनिर्दिष्टे हृत्सरोजे । गौणम्--आकारसाम्यरूपगुणसाम्यादागतम् ; स्यादिति शेषः । लक्षणापेक्षयापि गौणीवृत्तिर्जघन्येति हि यूपस्य स्वरूपं करोतीत्यत्र निर्णीतम् । दूषणान्तरमाह--तस्येत्यादिना । तस्याक्षिणी इत्यनयोः पदयोरवयवावयविभावेन मिथोऽन्वितार्थकयोरितरपदनिराकाङ्क्षता प्रतीयते । तामनादृत्याध्याहृताभ्यामन्वयाभ्युपगम इति शेषः । तस्येत्यस्याध्याहृतोपासनस्थानमित्यनेनान्वयः । अक्षिणी इत्यनेन चाध्याहृतस्योपासकपदस्यान्वय इत्यभ्युपगमादित्यर्थः । श्रुतप्रहाणमश्रुतकल्पनं चेति भावः । दूषणान्तरमप्याह--अध्याहार इति, स्यादिति शेषः । अनध्याहारेणोपपत्तौ अध्याहारकल्पनं दोष इति भावः । अपिशब्दो दूषणान्तरसमुच्चायकः । तथाहि--तस्येत्युपासकपरत्वे सत्यप्रकृतपरामर्शित्वापत्तिः, अनन्तरवाक्यस्थषष्ठ्यन्तशब्दविरूपतापत्तिः, दिव्याङ्गवर्णनप्रकरणरीतिभङ्गापत्तिः, ("यश्चायं दक्षिणेऽक्षिणी" इति) ["यश्चायं दक्षिणेऽक्षिन्" इति] दक्षिणस्याक्ष्ण उपासनस्थानत्वश्रवणादक्षिणी इति द्विवचनविरोधापत्तिः । "अन्तरादित्ये" इत्यादित्यमण्डलस्य स्थानतया विहितत्वादेवमक्षिणी इत्यक्ष्ण स्थानत्वे विहिते सति स्थानभेदेन रूपभेदात् विद्याभेदेन वाक्यभेदापत्तिरित्येतेषामनुक्तानामपिशब्दस्समुच्चायक इति ध्येयम् । दूषणान्तरमाह--समानेति । अधिकृतम् अधिकरणम् । अधिपूर्वः करोतिराधेयत्वे वर्तते । तस्मादधि-

करणार्थे—"[1] क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः" इति क्तप्रत्ययः समानम्—अभिन्नम्। अधिकृतं—अधिकरणं, विशेष्यं ययोस्तथोक्तयोः पदयोः कप्यासं पुण्डरीकमिति पदयोः, या गतिः—च शब्दाद्यभावेनानपोदितसामानाधिकरण्यप्राप्तिः तस्याः,। त्यक्तिः—वैयधिकरण्याश्रयणेन त्यागः, स्यादिति शेषः। संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति भावः। दूषणान्तरमाह—ऊर्ध्वमिति। अत्र रूपकथनादित्यादिः। रूपकथनादूर्ध्वम्—उपरितनस्य बुद्धिस्थस्य नाम्नः। उक्तिः—कथनम्। उचितेति शेषः। नामविधिवाक्यात् पूर्वं रूपकथनं ह्युचितम्। स्थानविधिपरत्वे त्वस्य वाक्यस्यौचित्यभङ्ग इति भावः। अत्रेदं तत्त्वम्—ऊर्ध्वं तदुक्तिः—कप्यासमित्याद्येतद्वाक्यादूर्ध्वम् उपासकाक्ष्णो हरिभजनपदत्वोक्तिरित्यर्थः। नातस्तच्छब्दस्य प्रकृतार्थपरत्वहानिरिति स्पष्टं अन्तरादित्याधिकरणश्रुतप्रकाशिकापरिश्रमशालिनाम्। तत्र हि "ऊर्ध्वमक्षिविद्याया उक्तत्वादत्र तदुक्त्यनपेक्षणादस्य पुनरुक्तिश्च" इत्यनुगृहीतम्। यद्यपि पूर्वोक्तदूषणमपि श्रुतप्रकाशिकारूढमेव; तथाप्यूर्ध्वं तदुक्तिरित्यस्य पौनरुक्त्योद्भावन एव तात्पर्यमित्यत्रोर्ध्वोक्तिशब्दाभ्यां लभ्यत इति। तस्मादिति तु न सदिति पूर्वेणान्वयः॥ (23)

* * * *

[अव०] अर्थान्तरमुपन्यस्य निराकरोति—[कश्चिदित्यादि]

[मू०] कश्चिज्जल्पति मर्कटस्य जघनं कप्यासमक्ष्णोरयं
दृष्टान्तः कथमिष्यते भगवतःसत्येव गत्यन्तरे।
सामानाधिकरण्यमत्र पदयोः प्राप्तं कुतस्त्यज्यते
पद्मं चेद्विशिनष्टि तत्सदृशि तच्छब्दस्तु गौणस्तव॥ (24)

[व्या०] कश्चित्—नामग्रहणानर्हः, पापीयान्। मर्कटस्य जघनं—वानरपृष्ठं, कर्म। कप्यासं जल्पति—कप्यासपदवाच्यमाह। कपिर्मर्कटः तस्यास आस्यते उपविश्यतेऽनेनेति व्युत्पत्त्या जघनप्रदेश उच्यत इति कश्चिज्जल्पतीत्यर्थः।

---

1 पा-अ. (३-४-७६)

" जघनं कामिनीश्रोणीपुरोभागे कटिस्थले " इति कोशवशात् जघनशब्दः पृष्ठे प्रयुज्यते। जल्पतीत्यनेन अवाच्यं वदतो जिह्वा कथं तव न शीर्यते इत्येतदभिप्रेतम्। तद्दूषयति—**अक्ष्णोरित्यादिना** । गत्यन्तरे—दिवसकरतेजोविकसित-मित्याद्युक्तप्रकारान्तरे। सत्येव, भगवतः—हेयप्रतिभटस्य। अक्ष्णोरयं, दृष्टान्तः मर्कटपृष्ठरूपमुपमानम् । **कथमिष्यते** हेयप्रतिभटभगवद्दिव्यनेत्रयोर्मर्कटपृष्ठं निहीनोपमानमित्यर्थः । **अत्र**—वाक्ये । **पदयोः**—कप्यासं पुण्डरीक-मित्यनयोः। **प्राप्तं**—विभिन्नविभक्तिराहित्येन स्वस्वभावेन प्राप्तम्। चशब्दाद्य-भावेनानपोदितं च। **सामानाधिकरण्यम्**—अनेकविशेषणविशिष्टैकार्थबोध-कत्वम्। कुतस्त्यज्यते केन हेतुना उपेक्ष्यते। **तच्छब्दः**—कप्यासशब्दः। **पद्मं**—पुण्डरीकपदवाच्यम्। **विशिनष्टि चेत्**—विशेषयति चेत्। तच्छब्दः तत्सदृशि मर्कटपृष्ठसदृशे **गौणस्त्वत्पक्षे** स्यादित्यर्थः॥

अयं भावः—मर्कटपृष्ठं पुण्डरीकं च किमुपमाद्वयम् उत एकोपमा। नाद्यः—स्वतः प्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात्; श्लाघ्योपमासंभवे हीनोपमाश्रयणायोगाच्च। द्वितीये, मर्कटपृष्ठसदृशपुण्डरीकसदृशे इत्युक्तं स्यात्। तदा कप्यासपदं गौणं स्यादिति।

**तुशब्दः** शङ्कान्तरपरिहारपरः। तथा हि-ननु प्रथमश्रुतकपिपदरूढ्यनुसाराच्चरम-श्रुतस्यासपदस्य गौणत्वमस्त्विति चेन्न । आसपदमुख्यार्थविशेषणसमर्पकस्य कपिपदस्य वाक्यानन्वयप्रसङ्गात्। एकदेशान्वयप्रसंगात् । तात्पर्यग्राहकमात्रत्वप्रसङ्गाच्च आसपदे लक्षणाप्रसङ्गाच्च॥

ननु 'मण्डपं भोजय' इत्यत्र मण्डपानकर्तृरूपयोगार्थापेक्षया मण्डपस्थजने रूढि-पूर्विकाया लक्षणायाः प्राबल्यवदत्रापि नाळस्थित्यादियोगापेक्षया मर्कटपृष्ठसदृशे रूढि-पूर्विकायास्तस्या अदोषत्वमिति चेन्न । यौगिकासपदसमभिव्याहारेण तन्न्यायस्यात्रा-प्रवृत्तेः। न हि 'मण्डपं भोजय' इत्यत्र यौगिकपदान्तरसाहचर्यमस्ति॥

ननु " रूढिर्योगमपहरति " इति न्यायेन योगतो नाळादिप्रतीत्यपेक्षया रूढ्या मर्कटप्रतीतिः प्रबलेति चेन्न। कपिपदवाक्यानन्वयादिरूपस्य आसपदे लक्षणाप्रसङ्गरूपस्य च रूढ्यर्थविरोधिलिङ्गस्य, पुण्डरीकस्थित्यधिकरणत्वरूपस्य च योगार्थानुकूललिङ्गस्य सद्भावेनात्र रूढेरनुन्मेषात्॥

5

ननु कप्यासपदं मर्कटजघनमात्रपरम् ; तथा च कप्यासं यथा पुण्डरीकमेवमक्षिणी इति योजनया मर्कटपृष्ठसदृशपुण्डरीकसदृशे इति लभ्यते । एवं च न पूर्वोक्तदोषः । किं तु रूढिसंग्रहरूपगुणश्चेति चेन्न । यथैवंशब्दयोः परस्परप्रतिनिर्देशरूपत्वस्य " यथा वै श्येनः" "यथैषिकतूलम् " इत्यादौ स्वरसतो दृष्टस्य भङ्गप्रसङ्गात् । एवंशब्दस्य वाक्यार्थप्रतियोगिकसादृश्यबोधकत्वेन पदार्थप्रतियोगिकसादृश्याबोधकत्वात् । अन्यथा 'चन्द्र इव मुखम्' इतिवत् चन्द्र एवं मुखमित्यापत्तेश्चेति ॥ (24)

* * * *

[अव०] अर्थान्तरमुपन्यस्य निराकरोति—[दरेत्यादि]

[मू०] दरविकसितं कश्चित् कप्यासमाह गतिस्त्वियं
भवतु भगवच्चक्षुर्दृष्टान्तपङ्कजसङ्गता ।
तदपि च न सत्तस्मिन्नर्थे यतो ननु कुत्रचि-
त्तदवयवशः संहत्या वा पदं व्युदपद्यत ॥ (25)

[व्या०] कश्चित् दरविकसितं ईषद्विकसितं कर्म । कप्यासमाह—कप्यासशब्दार्थमाह । "[1] ब्रुवः पञ्चानाम्" इति णलि आहादेशः । (आहेति पदमुवाचेत्यर्थे वर्तत इत्युक्तम् । तद्वा भवतु) । अत्राक्षिदृष्टान्तपुण्डरीकविशेषणत्वमहिम्नाऽर्थौचित्यवशेन कप्यासशब्दस्येषद्विकसिते रूढिशक्तिर्गृह्यते । यथा लोके क्वचिदपि अव्युत्पन्नत्वेऽपि यूपाहवनीयस्फ्यचकपालचषालचात्वालादिशब्दानां वाक्यान्तरपदान्तरसमभिव्याहारात्तत्तदर्थविषयतया व्युत्पत्तिर्गृह्यते तद्वत् । यद्वा, प्रोक्षणीशब्दवद्योगशक्तिरेव गृह्यते । "[2] ईषदर्थे" इति कादेशोऽजादावुत्तरपदेऽपि परत्वाद्भवतीत्युक्तत्वादीषदप्यासमित्यत्र ईषच्छब्दस्य कादेशे का अप्यासमिति स्थिते, शकन्ध्वादेराकृतिगणत्वात् पररूपं, पृषोदरादेराकृतिगणत्वाद्वा काशब्देऽन्त्यलोप इति कप्यासशब्दस्य योगः संभवतीति भावः । अत्रार्थौचित्यमभ्युपगच्छन् शब्दस्यावाचकत्वोपपादनेन दूषयति—गतिस्त्वित्यादिना । तुशब्देन पूर्वोक्तानु-

---

1 पा-अ. (३-४-८४)
2 (पा-आ-६-३-२०५)

चितार्थद्वयव्यावृत्तिः । भगवच्चक्षुर्दृष्टान्तपङ्कजे, संगता उपपन्ना । इयं गतिस्तु—अयं प्रकारस्तु । भवतु—प्रकृतौचित्यादीषद्विकासो समदिष्ट इति भावः । एवमभ्युपगमार्हांशोऽभ्युपगतः । अथ दूष्यांशं दूषयति—तदपीति । अपि—तथापि—तच्च न सत्—कप्याशसब्दस्येषद्विकासवाचकत्वमसमीचीनम् । चकारो दूषितार्थद्वयसमुच्चयपरः । कुत इत्यत्राह—यत इति । यतः—यस्मात् । तत्पदं—कप्यासपदम् । तस्मिन्नर्थे—ईषद्विकसितेऽर्थे । अवयवशः—अवयवेन । संहत्या वा—सङ्घातेन वा, समुदायेन वा । क्वचित्—वैदिकनिघण्टौ, लौकिकनिघण्टौ, व्याकरणे वा । न व्युदपद्यत अव्युत्पन्नमित्यर्थः । अवयवेन व्युत्पत्तिर्योगशक्तिः, समुदायेन व्युत्पत्तिस्तु रूढिशक्तिः । अवयवेन समुदायेनेति तृतीया वैशिष्ट्यार्थिका । वैशिष्ट्यं चाधाराधेयभावः । तथा च स्फट्यादिशब्दवत् वैदिकनिघण्ट्वाद्य [भावात्] (ननुशासना) न रूढिशक्तिः । सति गत्यन्तरे शकन्ध्वादित्वं पृषोदरादित्वं चागतिकगतिरूपमनुचितमिति नापि योगशक्तिरिति भावः । व्युदपद्यतेति कर्तरि लङ् । यतो न व्युदपद्यते ततो न सदित्यर्थः । शब्दस्य वाचकत्वाभावे प्रामाणिके सत्यौचित्यमात्रमकिञ्चित्करमिति भावः ॥ (25)

* * * * *

[अव०] एवमुक्तेषु षट्स्वर्थेषु आद्यानां त्रयाणां सिद्धान्तत्वेऽन्त्यानां त्रयाणां पूर्वपक्षत्वे च हेतुमाह—षट्स्वित्यादि]

[मू०] षट्स्वर्थेषु समीरितेषु चतुराः कप्यासवाचस्त्रयो
गम्भीराम्भ इति प्रकृत्य भगवद्रामानुजाङ्गीकृताः ।
तत्स्वीकारबहिष्कृतास्तदितरे हेयास्त्रयस्तद्विदा
श्लोकैः षड्भिरमीभिरित्थमुदितः सोऽयं विभागो मया ॥

[व्या०] समीरितेषु—उक्तेषु । षट्सु कप्यासवाचोऽर्थेषु त्रयः—'कपिस्वादित्यः' 'नाळं कपिः' 'कमुदकम्' इत्यादिश्लोकत्रयोक्तास्त्रयोऽर्थाः । गम्भीराम्भ इति प्रकृत्य—प्रक्रम्य, वेदार्थसङ्ग्रहे "गम्भीराम्भस्समुद्भूतसुमृष्टनाळरविकरविकसितपुण्डरीकदळायतामलेक्षणः" इत्यनेन वाक्येन, भगव-

द्रामानुजाङ्गीकृता—एतद्वाक्यज्ञाप्यभगवद्भाष्यकाराङ्गीकाराः, अत एव चतुराः शोभमानाः, तदङ्गीकारज्ञाप्यसौष्ठवा इत्यर्थः। तदितरे त्रयः—'कप्यासं भानुबिम्बम्' 'कश्चिज्जल्पति' 'दरविकसितम्' इति श्लोकत्रयोक्तास्त्रयः। तेषां भगवद्भाष्यकाराणां स्वीकारादभ्युपगमात् बहिष्कृताः—बहिर्भूताः,अनुक्तिज्ञापिततदङ्गीकाराः। अतएव, हेयाः—असमीचीनाः तदनङ्गीकारज्ञाप्यदोषा भवन्तीत्यर्थः। तद्विदा—सदाचार्योपदेशबलेन भाष्याभिप्रायवेदिना। मया इत्थमयं स विभागः; इत्थम्—उक्तप्रकारेण। अयम्—एतच्छ्लोकदर्शितः। सः—संप्रदायागतः। विभागः—सिद्धान्तपूर्वपक्षविवेकः। उदितः षड्भिः श्लोकैरुक्तः। आद्यानां प्रथमोक्तेरदूषणाच्च—सिद्धान्तत्वम्। अन्त्यानामनन्तरोक्तेर्दूषणाच्च पूर्वपक्षत्वं व्यज्यत इति (विभागोऽस्त्युक्तिः) [विभागोक्तिः] इति भावः।

अत्र "कपयोऽर्के भवा नराः" इति कोशसद्भावात्, "कपिर्भवति" इति [वैदिक] प्रयोगसद्भावात्, सलिलपानकर्तृत्वस्य मुख्यस्य योगार्थस्य सद्भावात्, भगवद्दिव्याक्ष्युपमानतायां विकासस्यान्तरङ्गत्वात्, सूर्यकिरणाधीनस्यैव च तस्य चारुतरत्वाच्च दिवसकरतेजोविकसितमित्यस्य प्रथममुक्तिः। अवयवार्थमात्रसद्भावेऽपि कोशप्रयोगयोरभावात्, अवयवार्थस्यापि करणत्वरूपस्यैव सत्त्वेन 'कर्तरि कृत्' इति औत्सर्गिककर्तृत्वरूपस्याभावात्, अक्ष्युपमानतायां विकासवन्नालस्थितेः साक्षादुपयोगित्वविरहेण म्लानतानिवृत्तिव्यञ्जनेनैवोपयोगित्वाच्च 'नालं कपिर्भवति' इत्यस्यानन्तरोक्तिः। तद्वदेव सलिलस्थितेस्तत्र साक्षादुपयोगित्वाभावात्, [प्यासशब्दे अपेर्धात्वर्थानतिरिक्तार्थत्वेन वैयर्थ्यात्] (धात्वनतिरिक्तार्थकोपसर्गस्याश्रयणीयत्वात्), तत्रापि शक्ततावच्छेदकानुपूर्विघटकयत्किंचिद्वर्णलोपस्याभ्युपगन्तव्यत्वाच्च 'कमुदकमिह प्यासः' इत्यस्य चरमोक्तिः। अत एवः "प्रतीमः कप्यासम्" इति प्रथमस्य स्वीयत्वोक्तिः, "उशन्ति मनीषिणः" "कविभिरुदितम्" इत्यन्त्ययोः परकीयत्वोक्तिश्च। अत एव च "गम्भीराम्भः" इत्यादिश्रीसूक्तौ अमात्यादेरन्तरङ्गत्वतारतम्येन नरेन्द्रासक्तितारतम्यवत्, प्रधानभूतविशेष्यसन्निधितारतम्येन रविकरेत्यादिविशेषणानामन्तरङ्गबहिरङ्गभावो व्यञ्जित इति ध्येयम्। अत्र च 'जातिनैमित्तिकं यथास्थान'मिति [नवमाध्याये] (नात्रिकाधिकरणे) "मौद्गं चरुं निर्वपेत् श्रियै श्रीकामः" इत्याम्नातायाम् इष्टौ "पौण्डरीकाणि बर्हींषि भवन्ति" इत्यत्र "दर्भैःस्तृणीत हरितैः" इति [मन्त्रस्य] दर्भपदस्थाने पुण्डरीकपदं

हरितपदस्थाने रक्तपदमूहितव्यमिति शाबरभाष्योक्तेः, पुण्डरीकशब्दस्य रक्ताम्भोजेऽपि वृत्तेर्निश्चयेन, रक्तान्तलोचनः क्षतजोपमाक्ष इत्यादिभिर्न विरोधः । कचित्तु "पुण्डरीकविशालाक्षौ" इत्यत्र सिताम्भोजपरतया पुण्डरीकशब्दो व्याख्यातः, तदप्यक्षिमध्यप्रदेशाभिप्रायकतयोपपन्नम् । एवमुभयार्थसाधारण्येन वेदार्थसंग्रहे पुण्डरीकपदमेव निर्दिष्टं भगवता । अत्रापि तत्सूचनाय "सपद्मश्रीमत्त्वात्" "इदं सरोजम्" "भवती नळिनम्" इति सामान्यपदानि निर्दिष्टानीति ध्येयम् ॥ (26)

* * * *

[अव०] ईक्षत्यधिकरणे प्रतिज्ञाविरोधादित्येतद्विषयभूतस्यादेशशब्दस्य पराभ्युपगतार्थः प्रतिक्षिप्तः "छान्दोग्ये केचित्" इत्यादिना । आनन्दमयाधिकरणे पुच्छब्रह्मणः प्राधान्यं प्रतिक्षिप्यानन्दमयस्य परमात्मत्वं साधितम् "षष्ठ्यान्यत्वम्" इत्यादिना । अन्तरादित्याधिकरणविषयभूतकप्यासश्रुतेः पराभ्युपगतार्थः प्रतिक्षिप्तः "कप्यासं भानु" इत्यादिना । अथ ज्योतिरधिकरणगुणसूत्रभूते "भूतादिपादव्यपदेशोपपत्तेश्चैवम्" इत्यत्र विषयभूतस्य "गायत्री वा इदं सर्वम्" इत्यस्य परोक्तार्थप्रतिक्षेपेण स्वाभ्युपगतार्थ उच्यते—[गायत्रीत्यादि]

[मू०] गायत्री नाम सामश्रुतिशिरसि परं ज्योतिरध्यायि सिध्य-
च्चातुष्पद्यं तु भूतक्षितितनुहृदयैः षड्विधं तद्विधाभिः ।
गानत्राणादिकाभिः श्रुतिगतवचनव्यक्तिभेदात्तु सिद्धा
वाक्प्राणोक्तिः परार्था स्वरसनिगमनश्रुत्यधीनं तदेतत् ॥ (27)

[व्या] अत्रायं श्रुतिसन्दर्भः—"[1] गायत्री वा इदं सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च । या वै सा गायत्री इयं वाव सा येयं पृथिवी अस्यां हीदं सर्वं भूतं प्रतिष्ठितम् । एतामेव नातिशीयते । या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते । यद्वै तत्पुरुषे शरीरम् इदं

---

1 छा. उ. (३-१२)

वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिताः। एतदेव नातिशीयन्ते। सैषा चतुष्पदा षड्विधा गायत्री" इति।

अस्यायमर्थः—गायत्री वा इदं सर्वं भूतमिति। गायत्रीशब्दः—चतुष्पाद्ब्रह्मपरः। सर्वभूतशब्द आत्मपरः। आत्मवर्गस्य तत्पादत्वं सामानाधिकरण्येनोक्तम्। तस्यैव ब्रह्मणो गानत्राणादिभिः षाड्विध्यं च विवक्षुः श्रुतिर्गानत्राणोपपादनाय वाग्रूपत्वमाह—'वाग्वै गायत्री' इति। गायत्रीशब्दवाच्यं चतुष्पाद्ब्रह्म वाग्रूपविशिष्टमित्यर्थः।[1] "रसोऽहमप्सु कौन्तेय" इत्यारभ्योच्यते "शब्दः खे पौरुषं नृषु" इति। तथा भगवत्पराशरवचनम् "शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः" इति। ततः किं विवक्षितषाड्विध्यस्येत्यत्राह वाग्वा इदं सर्वं भूतं गायति च त्रायते चेति। वाग्विशिष्टं परं ब्रह्म सर्वभूतं गायति अभिधत्ते; हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थः। एवमेकः पादो गानत्राणरूपं विधाद्वयं चोक्तम्। तदनुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाह—'या वै सा गायत्री इयं वाव सेयं पृथिवी' इति उक्ताकारविशिष्टप्रकृतधर्मिपरौ यत्तच्छब्दौ। या सा सर्वभूतरूपैकपादा गायत्री गायत्र्याख्यं ब्रह्म, तदेव पृथिवीत्यर्थः। कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राह—अस्यां हीति। ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम्। न हि केवलपृथिव्याः सर्वभूतधारणशक्तिरित्यर्थः। प्रतिष्ठात्वं च नियतमित्याह—एतामेव नातिशीयत इति। पृथिवीं भूतजातिर्नातिवर्तते। कर्मवश्यात्मनां नियमेन प्रतिष्ठात्वादशक्यातिक्रमणेत्यर्थः। पृथिवीमयब्रह्माण्डोदरे हि भोक्तृवर्गः परिवर्तते। एवं द्वितीयः पादो भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम्। अथ तृतीयं पादमाह—यावै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरमिति। पुरुषशब्दः शरीरविशिष्टजीवपरः [पृथिवी] पृथिवीरूपपादविशिष्टा या,(सा)गायत्री गायत्र्याख्यं ब्रह्म, सा शरीरं, शरीराख्यपादविशिष्टेत्यर्थः। भूतपृथिव्योर्गायत्रीसामानाधिकरण्येन निर्दिष्टतया [भूतपृथिवीशब्दयोः] (पृथिवीशब्दस्य) ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वात्' आम्रचम्पायन्यायादत्रापि [शरीरलक्षणपादान्तरनिर्देशकस्य शरीरशब्दस्य, निष्कर्षकशब्दत्वेऽपि सामानाधिकरण्येन निर्देशो युक्तः] (पादान्तरस्य तत्सामानाधिकरण्येन निर्देष्टुं युक्तत्वाच्च) शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वसदनतिवर्त्यत्वाभ्यामुपपादयति—अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त

---

1 गी. ७-८

2 गी. ७-८

इति। चतुर्थं पादमाह—यद्वै तत्पुरुषे शरीरं इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे हृदयम् इति। शरीराख्यपादविशिष्टं यद्गायत्र्याख्यं ब्रह्म तदेव [ हृदयलक्षणपादकम् ] (हृदयम्) इत्यर्थः। पूर्ववत् ब्रह्मात्मकत्वमुपपादयति—अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त इति। प्राणाः प्राणापानादयः इन्द्रियाणि वा। तेषां हृदयसंबन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम्। एवं तृतीयचतुर्थौ पादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम्। उक्तं चतुष्पात्त्वं षाड्विध्यं च निगमयति—सैषा चतुष्पदा षड्विधा गायत्रीति। एषा चतुष्पदा षड्विधा सा गायत्रीत्यन्वयः। एतद्ब्रह्म चतुष्पदत्वेन षड्विधत्वेन च प्रसिद्धा गायत्रीत्यर्थः। विधेयानुसारात् स्त्रीलिङ्गनिर्देशः। "इन्द्रश्शचीपतिः। बलेन पीडितः। दुश्च्यवनो वृषा। समित्सुसासहिः" इति चतुष्पदा षड्विधा च गायत्री प्रसिद्धा। तस्याश्च षड्विधत्वं तत्पादस्य षडक्षरत्वात्। चतुष्पदेति गायत्रीपादस्यैव निर्देशः। तस्य पदस्यर्ग्वाचकत्वाभावे "[1] टाबृचि" इति विहितटाबनुपपत्तेः। अतश्चतुष्पदेति पदं, गभीरायां नद्यामित्यत्र गभीरपदवत् गायत्रीपदमुख्यार्थं विशिनष्टि—षड्विधेति पदमपि तत्समभिव्याहारात्तद्विशेषणमेव। एवं च ब्रह्मणि गायत्र्यां चतुष्पात्त्वषाड्विध्योक्तेर्ब्रह्मणि गायत्री सादृश्ये तात्पर्यमवगम्यत इति तमिमं श्रुत्यर्थमाह—**गायत्री नामेति।**

**सामश्रुतिशिरसि**—छान्दोग्ये। **भूतक्षितितनुहृदयैः**—भोक्तृवर्गपृथिवीशरीरहृदयैः। **सिध्यत्पर्यवस्यत्**, चत्वारः पादा यस्य तत् चतुष्पात्, तस्य भावः चातुष्पद्यम्; ब्राह्मणादेराकृतिगणत्वात् ष्यञ्; पादस्य पदादेशः, चतुष्पादित्यत्र च "[2]पादस्य लोपः" इत्यन्त्यलोपः; चतुष्पात्त्वमित्यर्थः; पर्यवस्यच्चातुष्पद्यं यस्येति विग्रहः। **गानत्राणादिकाभिः**—गानत्राणभूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपाभिः। **तस्य**—चतुष्पात्त्वस्य, **विधाभिः**—तदुपपादकप्रकारैः। षड्विधं सिध्यत् षाड्विध्यकम्। **परं ज्योतिः**—"[3] अथ यदतः परो दिवो ज्योतिः" इत्युक्तं परं ब्रह्म। **गायत्री नाम**—चतुष्पात्त्वषड्विधत्वाभ्यां प्रसिद्धगायत्रीसदृशत्वेन। **अध्यायि**—अधीतमित्यर्थः।

---

1 पा. अ. (४-१-९)
2 पा. अ. (५-४-१३८)
3 छा. उ. (३-१३-७)

"[1] विभाषा लुङ्लृङोः" इति गाङादेशाभावः। नात्र गायत्र्यां ब्रह्मदृष्टिः। "[2]पूर्णामप्रवर्तिनीं श्रियं लभते" इति मोक्षफलश्रवणात्। नाप्याकाशाधिकरणन्यायेन गायत्रीशरीरकब्रह्मवेदनम्। ब्रह्मणश्चतुष्पात्त्वाद्युक्तिवैयर्थ्यात्। अतो ब्रह्मणि गायत्रीसादृश्यानुसन्धानमेव विधीयत इति भावः। अत्र सिध्यत्पदेन—"पादोऽस्य विश्वा भूतानि" इत्यनन्तरमन्त्रे कण्ठोक्तचतुष्पात्त्वव्यावृत्तिः। तुशब्देन—"वाक् पादः प्राणः पादः" इत्युक्तस्य, "अग्निः पादो वायुः पादः" इत्युक्तस्य च चतुष्पात्त्वस्य व्युदासः। भूतपृथिव्यादीनां कीर्तनमनन्तरं चतुष्पदेति निगमनस्वारस्यात् भूतपृथिव्यादीनां पादत्वं प्रतीयत इति, इदं चतुष्पात्त्वं न कण्ठोक्तम्; किन्तु पर्यवसानगत्या सिद्धम्। **श्रुतिगतवचनव्यक्तिभेदात्**—"या वै सा गायत्री" "इयं वाव सा" "इदं वाव तत्" इति श्रुतिशैलीवैलक्षण्यात्। "वाग्वै गायत्री" "अस्मिन् हीमे प्राणाः" इत्येतद्रूपाच्छैलीविशेषाद्धेतोः। **वाक्प्राणोक्तिः परार्था**—गानत्राणप्राणप्रतिष्ठात्वाद्युपपादनार्था। नतु भूतादिपदषट्कप्रतिपादनार्था। **तदेतत्**—पूर्वोक्तं, चतुष्पात्त्वषड्विधत्वाभ्यां ब्रह्मणि गायत्रीसादृश्यानुसन्धानम्। **स्वरसं**—स्वतः प्रतीतत्वलक्षणरसयुक्तं, **निगमनं**—कीर्तितोपसंहाररूपं यस्यां सा तथोक्ता **श्रुतिः**—सैषा चतुष्पदेति श्रुतिः **तदधीनं**—तत्प्रमाणकमित्यर्थः॥

अत्र श्रुतिगतवचनव्यक्तिभेदात् स्वरसनिगमनश्रुत्यधीनमित्याभ्यामस्याः श्रुतेः परोक्तार्थोऽनुपपन्न इति स्फोरितम्। यादवप्रकाशैरस्या ह्ययमर्थ उक्तः—"गायत्री वा इदं सर्वम्" इति ब्राह्मणं न चतुष्पात्त्वपरम्, किन्तु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणरूपविधाषट्कपरम्। "सैषा चतुष्पदा षड्विधा" इति वाक्यं च षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरम्। चतुष्पात्त्वं च "पादोऽस्य" इति मन्त्रवर्णप्रतिपाद्यमिति। अयमनुपपन्नः—सैषा चतुष्पदा षड्विधेत्युभयांशे निगमनप्रतीतेः स्वारसिकत्वादेकांशेऽनुवादत्वम्, इतरांशे विधायकत्वमिति वैरूप्यायोगात्। वाक्प्राणयोर्गानत्राणादिवदन्यार्थतया भूतपृथिव्यादिवत् प्राधान्यतः प्रतिपाद्यत्वाभावेन पदार्थषट्कासिद्धेश्चेति॥ (27)

*　　*　　*　　*

1 पा. अ. (२-४-५०)
2 छा उ. ३-१२.

[मू॰] अथ अन्तर्याम्यधिकरणम्—

*    *    *    *

[अव॰] अन्तर्याम्यधिकरणविषयभूतेऽन्तर्यामिब्राह्मणे "यस्य तमश्शरीरम्" इत्यत्र वाक्यार्थानध्यवसायः; "यस्य चेतनस्य यद्द्रव्यम्" इति शरीरलक्षणस्य द्रव्यत्वघटितत्वात् तमसश्च द्रव्याद्रव्यत्वयोर्वादिवाक्यसंमोहादत्राह—[तम इत्यादि]

[मू॰] तमो नाम द्रव्यं बहुळविरळं मेचकचलं
प्रतीमः केनापि क्वचिदपि न बाधश्च ददृशे।
अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते
निरालोकं चक्षुः प्रथयति हि तद्दर्शनवशात्॥ (28)

[व्या॰] बहुळं च तद्विरळं चेति विग्रहे [कञ्जकुब्जादिवत्] (खंजकुब्जादिवत्) समासः। बहुळं—सान्द्रं, विरळं—सान्तराळम्। एकव्यक्तौ सान्द्रत्वाद्यभावादवयवसंघातात्मकत्वमुक्तं भवति। अनेन सावयवत्वमुक्तम्। मेचकं—नीलं चलं चलनवत्। पूर्ववत्समासः। आभ्यां गुणक्रियावत्त्वं [उक्तं] भवति। तमो नाम द्वितीयान्तमिदं, नाम प्रसिद्धौ। अनेन भावरूपेण भासमानत्वमुक्तं भवति। द्रव्यं प्रतीमः द्रव्यत्वेन प्रत्यक्षयामः। अनुमिनुम इति वा। तमो द्रव्यं सावयवत्वाद्घटवत्; तमो द्रव्यं गुणक्रियाश्रयत्वात् घटवत्; तमो न तेजोऽभावरूपं विधि[भाव]रूपेण प्रतीयमानत्वात् घटवत्; तमो न गुणः 'गुणाश्रयत्वेन प्रतीयमानत्वात्, घटवत्; तमो न रूपप्रतीत्यभावः विधि[भाव]रूपेण प्रतीयमानत्वत् घटवत्; (वदि इत्यनुमानत्वात् घट) इत्यनुमानानि विवक्षितानि। अत्र मेचकमित्यनेन वियद्व्याप्तपार्थिवपरमणुगतनैल्यप्रतीतिरेवान्धकारप्रतीतिरिति पक्षः प्रतिक्षिप्तः। तथा सति हि नैल्यमित्येव तमोविषयकधीः स्यादिति भावः। तम इति भावरूपेण प्रतीयमानत्वादित्यनेन तेजस्संसर्गाभावो रूपप्रतीत्यभावो वा तम इति पक्षौ प्रतिक्षिप्तौ। हेत्वसिद्धिं परिहरति—केनापीत्यादिना। केनापि। पुरुषेणेति शेषः। क्वचिदपीत्यपिशब्देन कदापीति समुच्चीयते। बाधः—रूपादिनिषेधधीः। न ददृशे—न दृष्ट इत्यर्थः। दृशेः कर्मणि लिट्। बाधश्चेति चकारेण कारणदोषः समुच्चीयते। तथा च कारणदोषबाधकप्रत्ययविरहात्तमसि रूपादिप्रतीतिर्न भ्रान्तिरूपेति न हेत्वसिद्धिरिति

6

भावः। तमसि रूपादिप्रतीतेर्भ्रान्तित्वनियामको दोषो न दृश्यते। तमसि रूपादिप्रतीतेः सर्वानुभवसिद्धत्वेन सर्वत्र तत्कल्पनं च गौरवपराहतम्। अतः कारणदोषो दुर्वच इति भावः। ननु (तमसः कारणनिरूपणात्तमो न द्रव्यम्) [तमसो द्रव्यत्वे कारणं निरूपणीयम्] तथा हि तमसो रूपवत्त्वान्न तद्रहितानि वाय्वादीनि तत्कारणानि। स्पर्शगन्धविरहाच्चान्यान्यपि तत्कारणानि। (कारणगुणप्रक्रमेण हि कार्ये वैशेषिकगुणारम्भ इत्यालाह) [अतः कारणाभावात् अस्य कथं द्रव्यत्वमित्यत आह]—अतः कल्प्यो हेतुरिति। तमसि रूपादिप्रतीतेरबाधितत्वात् द्रव्यत्वसिद्धौ तत्कारणं कल्प्यमित्यर्थः। लोके कार्यं हि प्रतीतं कारणकल्पनायां प्रमाणम् "न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवमर्हति" इति न्यायात्। अबाधितप्रत्ययसिद्धस्य तमसः कारणं कल्प्यम्। तत्र स्वच्छद्रव्यत्वादाकाशकार्यं तमः। रूपवत्त्वं तु पञ्चीकरणादुपपद्यते। यद्वा "तेजःकार्यं तमः रूपवत्त्वात्; स्पर्शानुपलम्भस्तु स्वच्छत्वात्" इति व्यासपादाः। प्रभाप्रभावद्रूपेण तेजोद्रव्यवत्, पृथिव्येव तमोरूपेण तदाश्रयरूपेण च स्थिता। पृथिवीच्छायैव तम इति मेघनादारिसूरयः। न्यायसिद्धाञ्जनेऽपि पृथिवीविषये तमः परिगणितम्। अतः कारणं कल्पनीयम्। ननु रूपोपलब्धिवेळायां तमसोऽनुपलब्धेः, तदनुपलब्धिकाले तदुपलब्धिर्निमीलनवदपि संभवतीति शङ्कितं प्रत्यक्षमित्यत्राह—प्रमितिरपि शाब्दी विजयत इति। शास्त्रजन्यं प्रमात्मकं ज्ञानमुक्तशङ्कानिरासकमित्यर्थः। विजयो हि प्रतिपक्षनिरसनम्। "तमःससर्ज भगवान्" इत्यदिकमिह विवक्षितम्। [अपिना अस्मदादीनां रूपोपलब्धिकाले उलूकादीनां तदनुपलम्भः। तेषां तदुपलम्भकाले अस्मदादीनां तदनुपलम्भ इत्यत्राप्यप्रामाण्यप्रसङ्गेन तमसि रूपप्रतीतिर्न भ्रान्तिरिति युक्तिरपि समुच्चीयते](अपिशब्देन युक्तिरपि संगृह्यते। उलूकादीनामस्मदादिरूपोपलब्धिवेळायां रूपानुपलब्ध्या अस्मदादीनां तद्रूपोपलब्धिकाले तदनुपलब्ध्या तयोः शङ्कितत्वप्रसङ्गात्तमसि रूपप्रतीतिर्न भ्रान्तिरित्यर्थः)। ननु तमो न द्रव्यं तस्य ग्राहकाभावात्। आलोकाननुगृहीतत्वात् चक्षुर्न ग्राहकम्॥

[आलोकसमवधाने तु न गृह्यत इति तमसि रूपप्रतीतिर्भ्रान्तिरेव] (आलोकसन्निधावनवस्थानां नस्याग्राह्यत्वमतो रूपप्रतीतिर्भ्रान्तिरेव)निमीलने नीलप्रतिभासव-

दित्यत्राह—निरालोकमित्यादि। निरालोकं—आलोकासहकृतम्। चक्षुः—कर्तृ। तत्—तमः। प्रथयति—प्रकाशयति। कुत इत्यत्राह—दर्शनवशात्—उलूकादेरसदादेश्च रूपतेजोऽभावग्रहणे चक्षुष आलोकनिरपेक्षत्वादित्यर्थः। आलोकाभावभिन्नविषयकचाक्षुषत्वेनालोकसंयोगत्वेन कार्यकारणभावः परमते। अस्मन्मते तु आलोकाभावभिन्नस्थाने तमोभिन्नत्वं निवेश्य कार्यकारणभावः। रूपप्रतीतेर्भ्रमत्वकल्पनं त्वधिकं परमत इति भावः॥ (28)

* * * *

[अव०] भूमाधिकरणसिद्धान्तमाह—[भूमेत्यादि]

[मू०] भूमाख्यः पुरुषोत्तमो यदधिकं ब्रह्मेह सत्याह्वयं
प्राणाख्यादवरात्मनस्तु बलतस्तज्ज्ञाधिकस्सत्यवित्।
यः सत्यं वदतीति वाग्गमयितुं न ह्यग्निहोत्र्यन्तरं
शक्नोति प्रकृताग्निहोत्र्यवगमाद्भज्ञस्तु शब्दश्रियः॥ (29)

[व्या०] छन्दोगाः समामनन्ति—"[1]यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" इति। अयं भूमशब्दो(वैपुल्यविशिष्टवाचक)बहुशब्दादिमनिचि निष्पन्नो, यद्यपि वैपुल्यवाचि; तथापि [अल्पशब्द] (अल्प)प्रतियोगिनिर्देशत्वाद्वैपुल्याश्रयपरः; तथा च भूमा विपुल इत्यर्थः। भूमशब्दार्थविशेष्यश्चात्मा; "तरति शोकमात्मवित्" इति प्रक्रम्य, भूमानमुपदिश्य, "आत्मैवेदं सर्वम्" इत्युपसंहारात्। तत्र किमयं भूमगुणविशिष्टः प्रत्यगात्मा परमात्मा वेति संशयः।

प्रत्यगात्मा भूमेति पूर्वः पक्षः। आत्मजिज्ञासवे नारदाय प्राणोपदेशानन्तरमन्यानुपदेशेन प्राणशब्दितजीव एव आत्मोपदेशसमाप्तिप्रतीतेः। प्रत्यगात्मनोऽप्यविद्यामुक्तस्य सुखरूपत्वमुपपद्यते। न च "एष तु वा अतिवदति यः सत्येनातिवदति" इति तुशब्देन प्राणातिवादिनमपेक्ष्य सत्यातिवादिनोऽन्यत्वप्रतीतेः प्राणशब्दोक्तजीवादधिके सत्यनामनि ब्रह्मणि आत्मोपदेश-

1 छा. उ. ७-२४-१.

समाप्त्यवगमेन भूमा परमात्मेति वाच्यम् । "स वा एष एवं पश्यन्" इति प्रकृतप्राणातिवादिनः प्रत्यभिज्ञानेन तस्य, "एष तु वा अतिवदति" इति सत्यवदनमङ्गं विधीयते । यथा "एष तु वा अग्नि-होत्री यः सत्यं वदति" इति प्रकृताग्निहोत्रिणः सत्यवदनं विधीयते ; तद्वदिति ।

सिद्धान्तस्तु—परमात्मैव भूमा "एष तु वा" इति प्राणातिवाद्यन्यत्वप्रतीतेः । न च "एष तु वा अग्निहोत्री" इति वाक्यन्यायावतारः । तत्र हि द्रव्यदेवतान्तरा-भावेनाग्निहोत्रान्तराप्रतीतेरगत्या तुशब्दस्वारस्यभङ्गः । इह तु प्रकृतातिवादनिमित्त-प्राणातिरिक्तसत्यशब्दोक्तपरमात्मरूपातिवादनिमित्तान्तरसंभवात्किमिति तुशब्द-स्वारस्यभङ्गः कार्यः । सत्यशब्दो हि परमात्मवाचकः । छान्दोग्य एव "तस्य ब्रह्मणो नाम सत्यम्" इति श्रवणात् । अतः सत्यशब्दोक्ते परमात्मनि आत्मशब्दपर्यवसानाद्भूमा परमात्मेति ।

तमिमं सिद्धान्तमाह—भूमाख्य इत्यादिना । भूमा निरतिशयसुखलक्षणतया वेदे भूमशब्दनिर्दिष्टः पुरुषाणामुत्तमो नारायण एव । कुत इत्यत्राह—यदिति । यत्—यस्मात् । इह—भूमविद्यायाम् । प्राणाख्यात्—प्राणसहचारेण प्राण-शब्दोपचरितादवरात्मनः । "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति परमात्मापेक्षया-पकृष्टाज्जीवात् । अधिकं—अतिरिक्तम् । ब्रह्म, सत्याह्वयं—सत्यशब्दाभिहितं—भवति । ततः परमात्मन्यात्मशब्दोपदेशपर्यवसानाद्भूमा पुरुषोत्तम इत्यर्थः । "पुरुषं सत्यम्" इति सत्यशब्दसामानाधिकरण्येन पुरुषशब्दनिर्देशात्पुरुषोत्तम इति साध्यनिर्देशः । "संप्रसादादध्युपदेशात्" इति सूत्रानुसारेणाधिकमिति निर्देशः । ननु "एष तु वा अतिवदति" इति प्राणातिवादिनः सत्यवदनं विधीयत इत्यत्राह—तुवलत इति । सत्यवित्—सत्यनामकब्रह्मनिमित्तका-तिवादहेतुसत्यवेदनवान् । तुवलतः—तुबलेन । तत्ज्ञाधिकः—प्राणवेद्य धिकः । तुशब्दो हि पूर्वोक्तादर्थान्तरे स्वरसः । अतः प्राणातिवादिनोऽन्यः सत्यवादी कश्चिदुच्यते । प्राणातिवादिनमपेक्ष्य सत्यातिवादिनः प्रकर्षश्च, तद्वेद्यप्राणादेतद्वेद्यसत्यप्रकर्षनिबन्धन इति सत्यशब्दोक्ते प्रकृतात्मोपदेशपर्यव सानात् भूमा पुरुषोत्तम इत्यर्थः । "एष तु वा अग्निहोत्री" इति वाक्यवै षम्यमाह—य इति । यः सत्यं वदतीति वाक्ये—"एष तु वा अग्निहोत्री

यः सत्यं वदति" इति वाक्यम् । प्रकृताग्निहोत्र्यवगमादग्निहोत्र्यन्तरं— प्रकरणादवगम्यमानादग्निहोत्रिणोऽन्यमग्निहोत्रिणम् । गमयितुं न शक्नोति । द्रव्यदेवताभावादित्यर्थः । हिशब्दो हेतौ । तस्मात्, शब्दश्रियः तुशब्द-स्वारस्यस्य । भङ्गः—त्यागः सोढ इति शेषः । तद्वत् प्रकृतेऽनुपपत्त्यभावेन, तुशब्दस्वारस्यभङ्गोऽनुचित इति भावः । अतिवादित्वमतिक्रान्तस्वोपास्यवस्तु-वादित्वम् । तच्च परिमितसुखे प्रत्यागात्मनि न संभवति । किं तु निरतिशय-सुखस्वरूपे परमात्मनि संभवति । अतः परमात्मैव भूमेति ॥ (29)

* * * *

[अव०] दहराधिकरणविषयस्य "अथ यदिदमस्मिन्" इत्यादेरर्थाभिधाने परपक्षात् स्वपक्षे वैलक्षण्यमाह— [अस्वारस्यचतुष्टयमिति]

[मू०] अस्वारस्यचतुष्टयं परमते यच्छब्दलिङ्गान्यथा
तस्मिन्नित्यनपेक्षया व्यवहिते हृत्पुण्डरीकेऽन्वयः ।
अप्याकाङ्क्षितकामवेदनविधिक्षेपस्त्वपक्षे द्वयं
यच्छब्दस्य यदैकशेष्यमपि या तत्रैकवद्भाविता ॥ (30)

[व्या०] अत्रायं श्रुतिक्रमः—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम् [ तद्वाव विजिज्ञासितव्य" मिति ] इति । अस्यायमर्थः परैरुक्तः—अस्मिन् ब्रह्मपुरे—शरीरे ; यदिदं [पुण्डरीकं] पुण्डरीकाकारं ; दहरम्—अल्पं ; वेश्म ; अस्मिन्—हृदय पुण्डरीकवेश्मनि ; अन्तः—अन्तर्वर्ती ; दहर आकाशः—ब्रह्म ; तस्मिन्—हृदयपुण्डरीकाकाशे ; यत्—दहराकाशः ; सामान्ये क्लीबं ; अस्तीति शेषः ; तत्—उपास्यं ; तत्पदमपि सामान्ये नपुंसकमिति ।

स्वाभिमतार्थस्तु-यदिदं शरीरे पद्माकारं हृदयायतनं ; अस्मिन् हृदयायतने अन्तरोऽन्तर्वर्ती ; दहराकाशः-परं ब्रह्म ; तस्मिन्नित्यादि—अस्तिर्भवतिपर इत्यस्तीति लभ्यते ; यदस्ति तस्मिन्नन्तश्चेत्यन्वयः, यो दहराकाशोऽस्ति ; यत्तदन्तर्वर्तीति तदर्थः ; यश्च यच्च यदिति पुंनपुंसकयोरेकशेषः ; तदन्वेष्टव्यं —

स च तच्चान्वेष्टव्यं; दहराकाशस्तदन्तर्वर्तिगुणजातं चोपास्यमित्यर्थः। "आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्" इत्युत्तरानुसाराद्यच्छब्दादिषु त्रिष्वप्येकशेषाश्रयणम्। एकशेषवशादेकयत्पदोपस्थितयोरपि दहराकाशतद्गुणयोर्योग्यतया दहराकाशस्यास्तीत्यनेनान्वयः। गुणजातस्य तस्मिन् अन्तरित्यनेनान्वयः। "पुष्पवन्तौ दिवा दोषा पद्मोत्पलविकासकौ" इत्यादिष्विव यथायोग्यमन्वय इति।

अनयोरर्थयोः स्वारस्यास्वारस्यविवेकमाह—अस्वारस्येत्यादिना। "अथ यदिदम्" इत्यादिवाक्य इति शेषः। यच्छब्दस्य—यदन्तरिति यत्पदस्य, लिङ्गव्यथा—पुँल्लिङ्गाकाशशब्दनिर्दिष्टदहराकाशपरामर्शित्वप्राप्तपुँल्लिङ्गबाधनम्। इदमेकमस्वारस्यं परमते। स्वमते तु नपुंसकशेषान्न दोषः। यद्यप्युभयत्र शास्त्रीयं क्लीबत्वम्; तथापि स्वतःप्राप्तपुंस्त्वबाधनमधिकं परमत इति हृदयम्। तस्मिन्नितीति। अनपेक्षयेति सहार्थे तृतीया। व्यवहिते—दहरोऽस्मिन्निति वाक्यव्यवहिते। हृत्पुण्डरीके, अन्वयः—परामर्शित्वम्। अनपेक्षशब्देन तद्वैयर्थ्यं लक्ष्यते। तथा च तस्मिन्नित्यस्य वैयर्थ्यं, व्यवहितपरामर्शित्वं चेति दोषद्वयमित्यर्थः। "दहरोऽस्मिन्नन्तराकाशस्तदन्वेष्टव्यः" इत्येवालमिति। (तस्मिन्नित्यस्य वैयर्थ्यं व्यवहितहृदयपुण्डरीकपरामर्शित्वं चेति भावः)। अस्माकं तु गुणप्रतिपादनेन तस्मिन्नन्तरित्यस्य सार्थक्यम्। दहराकाशस्याप्युपास्यत्वार्थं यत्पदैकशेषाश्रयणमपि। दहरोऽस्मिन्नित्यव्यवहितदहराकाशपरामर्शित्वाच्च न व्यवधानदोष इति हृदयम्। आकाङ्क्षितस्य—"एतांश्च सत्यान्" इत्युपर्यनुवादेन पुरोवादार्थमपेक्षितस्य, कामवेदनविधेः—काम्यन्त इति कामाः कल्याणगुणाः, ते चापहतपाप्मत्वादयः, तेषां वेदनं—उपासनं, तस्य विधिः—विहितत्वानुमानाद्विधिविषयत्वसिद्धिः, तस्याः, क्षेपः—निरासः। अपिशब्दस्समुच्चये। अस्माकं तु गुणगुणिनोरुभयोरेवोपास्यत्वान्न तत्त्याग इति भावः। "कामाः काम्यस्पृहासराः" इत्यभिधानकोशात्, काम्यपरस्य कामशब्दस्य प्रकरणादपहतपाप्मत्वादिबोधकत्वम्। एतदस्वारस्यचतुष्टयं शङ्करमत इत्यन्वयः। स्वपक्ष इत्यादि। यच्छब्दस्य तच्छब्दादेरुपलक्षणम्। यदैकशेष्यं—एकशेषत्वं ब्राह्मणादिनिवेशाद्भावे ष्यञ्। तत्र—एकशेषत्वेनाभ्युपगते यच्छब्दादौ। या एकवद्भाविता—अर्थस्यैकवद्भावविधानप्रयुक्तमेकवद्भाववत्त्वं तदिदं द्वयं—अस्वारस्यं स्वपक्ष इत्यन्वयः। (उत्तरयत्पदत्वान्न तत्पदाध्याहार इति बोध्यम्)॥

अत्र यश्च यच्चेत्यादिविग्रहे यत्तदोस्त्यदादिसूत्रेणैकशेषः। अन्वेष्टव्यपदे तु "नपुंसकमनपुंसकेन" इति सूत्रेण (एकवदिन्यर्थस्यै) एकवद्भावविधानात्। [तत्र]अन्वेष्टव्यशब्दवत्तत्समानाधिकरणयत्तदोश्चैकवचनान्तत्वं सिध्यति। पुंनपुंसकयोस्तु "परत्वान्नपुंसकं शिष्यते" इति क्लीबत्वमपि यत्तदोस्सिद्धम्। अनुगृहीतं च व्यासपादैः "त्यदादीनि सर्वैर्नित्यम्" इति पुल्लिङ्गनपुंसकलिङ्गयच्छब्दयोरेकशेषः "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इति नपुंसकान्तत्वमेकवचनान्तत्वं चेति। अत्र पुन्नपुंसकयोस्तु-'परत्वान्नपुंसकं शिष्यते' इत्येतद्विनापि "उद्दिश्यमानप्रतिनिर्दिश्यमानायोरेकत्वमापादयन्ति सर्वनामानि [पर्यायेण] तल्लिङ्गमुपाददत इति कामचार" इत्युक्तेः (कांस्यभोजिन्यायेन) [कांस्यभोजनन्यायेन] विशेषणस्याप्यन्वेष्टव्यपदस्य, नपुंसकसूत्रेण कृतैकशेषतया निश्चितलिङ्गस्य विधेयपरत्वेन प्राधान्यात्, तल्लिङ्गमेवानिश्चितलिङ्गस्य त्यदादिसूत्रेण कृतैकशेषमात्रस्य उद्देश्यसमर्पकस्यापि तत्पदस्य न्याय्यमिति, तत्परतन्त्रस्य यत्पदस्यापि तदेव लिङ्गमिति सर्वत्र नपुंसकसूत्राधीनमेव नपुंसकत्वमित्यभिप्रायेणानपुंसकमित्युक्तम्। अन्वेष्टव्ये पदे नपुंसकानपुंसकसहोक्तिवशप्रवृत्तेन नपुंसकसूत्रेणार्थस्यैकवद्भावातिदेशात्तत्समानाधिकरणस्याप्येकवद्भावसिद्ध्यै तत्पदे एकवचनान्तत्वं तत्पारतन्त्र्याच्च यत्पदेऽपीत्यभिप्रायेण एकवचनान्तत्वं चेत्युक्तमिति ध्येयम्। एवं चात्र भावप्रकाशिकाकृदुक्तक्लिष्टनिर्वाहो नादर्तव्यः। 'रक्षोहागमलध्वसन्देहाः प्रयोजनम्' इत्यत्र तु पदसंस्कारपक्षाश्रयणादन्तरङ्गत्वात् प्रथममुपजायमानेतरेतरयोगद्वन्द्वप्रयुक्तं बहुत्वं पदान्तरसम्बन्धनिमित्तकेन बहिरङ्गेणैकवद्भावेन बाधितुं न शक्यमिति बहुवचनोपपत्तिः। पदवाक्यसंस्कारपक्षयोश्च लक्ष्यानुरोधित्वात्। क्वचिद्वाक्यसंस्कारपक्षाश्रयणेन 'व्याकरणमधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायत' इत्यत्र समानाधिकरणतिङन्तस्यैकवचनान्तत्वं कृतमित्युपदर्शितव्यासपादसूक्तेर्निर्वाहान्तराणि तु पाराशर्यविजये महाचार्यैरनुगृहीतानि तत्रैव द्रष्टव्यानि॥ (30)

*     *     *     *

[अव०] देवताधिकरणसिद्धान्तमाह—[पटुत्यदि]

[सू०] पटुतरविग्रहादि वहतां भवतापवतां
भगवदुपासनं दिविषदामपि संभवति।

ननु शतमर्थवादवचसामपि मन्त्रगिरां
विधिवदिह प्रमाणमपदोषमपुंप्रभवम् ॥ (31)

[ व्या० ] अत्र देवतानां ब्रह्मविद्यानधिकारोऽर्थित्वाद्यभावात् तदभावश्च चैतन्याद्यभवात् । मन्त्रार्थवादयोः ( स्मृतिसती) [अनुष्ठेयार्थप्रकाशनस्तुती ] दपरत्वान्न तत्र तात्पर्यम् । चैतन्यरहितस्याप्युद्देश्यत्वसंभवान्न त्यागात्मकयागविधिना तत्सिद्धिः । क्षणध्वंसिनोऽपि कर्मणोऽपूर्वद्वारा कालान्तरीयफलसाधनत्वनिर्वाहान्न निर्वाहकप्रसादाश्रयतयापि तत्सिद्धिः । देवतारहितेषु केषुचिदपूर्वस्यावश्यकत्वाच्चार्थवादिकप्रसादादरः । अतोऽशरीराणामचेतनानां देवतानामनधिकरो ब्रह्मोपासनेष्विति पूर्वः पक्षः ।

सिद्धान्तस्तु—सामविधिब्राह्मणे, "मयि वर्च इत्येतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानस्त्रयाणां लोकानामाधिपत्यं गच्छति" इति इन्द्रपदस्य फलत्वश्रवणात्, अन्यत्रापि मरुदादिदेवतापदप्राप्तेर्मधुविद्याफलत्वोक्तेः, देवतावशीकारस्य च तत्र तत्र फलत्वोक्तेः, फले च तात्पर्यावश्यंभावात्, उपासनप्रकरणस्थैरपि "तौ ह प्रजापतिम्" इत्यादिभिः कर्मविधिशेषभूतैश्च "वज्रहस्तः [ पुरन्दरः] " इत्यादिभिर्देवतानां चैतन्यादिसिद्धिः । अत एव चार्थवादिकप्रसादादरावश्यंभावः । देवतारहितेषु च भगवत एव स्वप्रसादद्वारा फलप्रदत्वम् । मन्त्रार्थवादयोश्च विधिवदेवापौरुषेयत्वादिसाम्यात् प्रामाण्यम् । स्मृतिस्तुती च निरालम्बने न प्रसिध्यतः । असत्कीर्तनेन च न प्ररोचना संभवति । वेदान्तेषु देवादि-चतुर्विधसृष्टिराम्नायते । अतो देवताविग्रहादिसद्भावात् ब्रह्मविद्यायामस्त्येवाधिकारो देवतानामिति । तमिममाह—पटुतरेति ।

पटुतरं च तत् विग्रहादि चेति विग्रहे कर्मधारयः । आदिपदेन वेद-[विद्या]परिग्रहः । "ब्रह्म बृहस्पतिः" इत्यादिना देवानां ब्राह्मण्याद्यवगमाद्भवान्तराधिगतवेदाप्रमोषेण वा तत्सिद्धिः । विग्रहस्य पटुतरत्वं "जातपुत्रः" इत्युक्तावस्थाविशेषरूपं, विष्णुक्रमणादौ योग्यतारूपं, अपङ्गुत्वादिकं च विवक्षितम् । विद्यायाः पटुतरत्वं च उपदेष्टृनैरपेक्ष्यादिरूपं विवक्षितम् । विग्रहादीति द्वितीयान्तं, सामान्ये क्लीबम् । वहतां—भारतया बिभ्रताम् । अनेन दुरपह्नवत्वं व्यज्यते । भवतापवतां—संसारतापातुराणाम् । अतिशायने मतुप् । गजस्यापि स्वानुरूपो वातरोग इतिवदिति भावः । आभ्यामर्थी समर्थो विद्वांश्चेत्युक्तमधिकारत्रयमुक्तम् । तथाविधानां दिविषदामपि—

देवतानामपि। एतदपेक्षया प्रकृष्टविष्टपस्थत्वेऽपि नित्यविभूत्यपेक्षया निरयस्थत्वात्तेषामुपासनेच्छा संभवतीति सूच्यते। भगवतः—हेयप्रतिभटकल्याणगुणाकरस्य अनेन उपायोपेयत्वौपयिकगुणविशेषा अभिप्रेताः। उपासनं—असकृदावृत्तचिन्तनम्। संभवति—प्रामाणिकमित्यर्थः। अत्रोपासनमित्यनेन "तदुपर्यपि बादरायणः संभवात्" इति सूत्रस्थतच्छब्दार्थ उक्तः। दिविषदामित्युपरिशब्दार्थः। मनुष्याधिकारत्वादिति पूर्वसूत्रप्रस्तुतमनुष्याधिकारस्तत्रात्र च, अपिना समुच्चीयते। पटुतरेत्यादिना संभवाद्दिति शब्दस्यार्थ उक्तः। अर्थवादवचसां—"वज्रहस्तः" इत्यादीनां। "अथ तद्धोभये देवासुराः" इत्यादीनां च कर्मोपासनविधिशेषभूतार्थवादवाक्यानाम्। मन्त्रगिरां—देवतास्तुत्यनुष्ठेयप्रकाशनपरमन्त्रवर्णानाम्। अपिशब्देन देवतापदप्राप्तिसाधनकर्मविधयो गृह्यन्ते। शतं आनन्त्यपरम् (इदं विनापि मानान्तरविरोधं) भूयसां बलीयस्त्वं न बाधितव्यमिति भावः। प्रमाणम्—अबाधितार्थप्रतिपादकम् (इति योजना)। तत्कथंभूतमित्यत्राह—अपदोषमिति। निर्दोषम् (पौरुषेयं च) अपुंप्रभवं—अपौरुषेयं च] विधिवत्—विधिवाक्यवत् प्रमाणमेव। नन्वित्यवधारणे। निर्दोषापौरुषेयत्वसाम्यात्, मानान्तरविरोधविरहाच्च अर्थवादादेर्विधिवदेव प्रामाण्यात् देवताविग्रहादिसिद्धेरर्थित्वादिसंभवादस्त्येव ब्रह्मविद्याधिकारो देवानामिति, मन्त्रार्थवादयोर्विधिवत्प्रामाण्यस्थापनसंरम्भेण कण्ठोक्तिः। विधिशेषाणां तु प्रतियोग्यभ्युपगमादपिशब्देन सूचनमिति ध्येयम्॥ (31)

* * * *

[अव०] उक्तमेव विस्तृणीते—[स्तुतीत्यादि]

[मू०] स्तुतिपरमाद्यमत्र निजसाध्यविधेयरुचि-
प्रजननसिद्धये स्ववचनीयगुणादरवत्।
तदितरथा न सिध्यति विधिष्विव तत्त्वविदां
कथमसता गुणेन कथितेन नुतिर्भवति॥ (32)

[व्या०] स्तुतिपरं-गुणाभिधानपरम्। अत्र - विधिशेषभूतार्थवादमन्त्रसमुदाये। आद्यं अर्थवादात्मकं कर्तृ। निजसाध्यायाः स्वकार्यभूतायाः; विधेयेषु-यागादिषु रुचेः इच्छाविशेषस्य, प्रजननस्य सिद्धये रुच्युत्पत्तिसिद्ध्यर्थम्। स्ववचनीयगुणेषु -

7

स्वप्रतिपाद्यश्चेपिष्ठत्वादिगुणेषु आदरवत् - तात्पर्यवदित्यर्थः । स्तुतिपरमिति चोद्यबीजमेव परिहारबीजतया कथमसतेत्यादिनोच्यते । प्रजननेति प्रशब्देन कल्पितस्तुतिशक्तिकनिरर्थवादविधिस्थलव्यावृत्तिर्विवक्षिता । उक्तार्थमर्थापत्त्या द्रढयति-तदित्यादिना । तत्— विध्यपेक्षितं स्तुतिपरत्वं कर्तृ । इतरथा— गुणतात्पर्येण विना । न सिध्यति—न संभवति । 'विधिष्विव' इति पूर्वान्वयी, यथा विधेर्गुणतात्पर्यविरहान्न स्तावकत्वं तद्वदर्थवादस्यापि गुणतात्पर्यविरहान्न स्तावकत्वमिति भावः । यद्वा यथा विधिषु स्वार्थतात्पर्येण विना न प्रवर्तकत्वसिद्धिस्तथार्थवादेष्वपि स्वार्थतात्पर्येण विना न स्तावकत्वसिद्धिरित्यर्थः । अथ वा 'विधिष्विव' इत्युत्तरान्वयी । तत्त्वविदां—प्रतिपिपादयिषितार्थ-विपरीतविषयकप्रमात्मकविशेषदर्शनवतां पुरुषाणां । विधिष्विव "कषायं पिब शिखा ते वर्धिष्यते" इत्याद्युपच्छन्दनवाक्येष्विव तत्प्रतिपाद्यालीकसाध्यसाधन-भावेनेव । कथितेन—अर्थवादबोधितेनापि । असता—निश्चितालीकभावेन । गुणेन, नुतिः - स्तुतिः (रुचिः पूर्वप्रवृत्तिः) । कथं भवति—न भवतीत्यर्थः ।

[तथा च द्रमिडभाष्यम् "नासता स्तुतिरुपपद्यते" इति] (तदिदं भाषितं भगवता—'न चासता गुणेन कथितेन प्ररोचना जायते' इति ।) सतामेव गुणानां कीर्तनं स्तुतिर्नासताम् । तस्मिन्नेव स्तुतिशब्दस्य प्रयोगप्राचुर्यात् । 'नानृतं वदेत्' इति निषेधस्य स्तुतिव्यतिरिक्तविषयकत्वकल्पने गौरवाच्च । (किं चैवं तुल्यन्यायतया निन्दापवादादेरसद्दोषकथनत्वापत्तावपवादि हरेर्दोषमित्याद्यस्वारस्यं स्पष्टम्) । "भूतार्थे कतमा स्तुतिः" इत्येतत्तूपक्रमगतवाक्यशेषानुसाराद्यावदर्थो वक्तुं न शक्यत इत्येतदर्थकमिति भगवद्गुणदर्पणे स्पष्टम् । अत एव कविभिरपि, (अर्थवाद एष दोषः तु किंचित्कथयेति मिथ्याभिशस्तिरूपवस्तुसद्दोषकथनप्रतियोगितयाऽर्थवादो निर्दिष्टः) । अन्यथा हि वास्तवं तु किंचित्कथयेति स्यात् । गुणाभिधानमात्रं स्तोत्रमित्याश्रयणेऽपि नार्थवादानां स्वार्थतात्पर्ये किंचिद्बाधकम्, असतस्तु न प्ररोचकत्वमित्यभ्युपगमात् । वेदान्ताचार्यास्तु—" स्तोत्रव्याख्याने स्तोष्यामीति— परमार्थगुणवर्णनेन सेविष्य इत्यर्थः । तथा च द्रमिडभाष्यम्—" नासता स्तुतिरुपपद्यते " इति । आहुश्च वरदाचार्याः—" कथमसता गुणेन कथितेन नुतिर्भवति " इति प्राहुः ॥

तेषामयमर्थोऽस्य श्लोकस्याभिप्रेतः । अत्र—अर्थवादमन्त्रात्मकभागद्वये, [आद्यं] प्रथमं अर्थवादरूपं, निजसाध्यविधेयरुचिप्रजननसिद्धये स्तुतिपरं सत्,

रुचिसिद्ध्यर्थस्तुतिपरताकं सत्, [स्ववचनीयगुणादरवत्]—स्वप्रतिपाद्यगुणेषु सत्यत्वतात्पर्यरूपादरयुक्तं, भवति। तत्—स्तुतिपरत्वम्। इतरथा— गुणसत्यत्वतात्पर्यविरहे। न सिध्यति। स्तुतित्वस्य परमार्थगुणवर्णनत्वव्याप्यत्वाद्व्यापकाभावे व्याप्याभावादित्यर्थः। तत्त्वविदां—यथार्थदर्शिनाम्। विधिष्विव—उपच्छन्दनवाक्येष्विव। कथितेनासता गुणेन, नुतिः, कथं भवति— न कथमपीत्यर्थः। परमार्थगुणवर्णनं हि स्तुतिः। तत्र गुणानां घटकतया हेतुत्वविवक्षया तृतीया। "न चासता गुणेन कथितेन प्ररोचना जायते" इति भाष्ये, प्ररोचनाशब्दः स्तुतिपरः। "स्तुत्यं स्तुतिभिरर्थ्याभिः" इत्यत्र तु गुणवर्णनमात्रे स्तुतिशब्दो गौणः। आशासनांशेष्वर्थोपधायकत्वं वा अर्थ्याभिरित्यत्राभिप्रेतम् "वाचमर्थोऽनुवर्तते" इति न्यायादिति॥ (32)

* * * *

[अव०] (विध्यर्थवादमन्त्राणामिति क्रमानुसारिणी) अर्थवादवचसां मन्त्रगिरामिति क्रमे प्रथमनिर्दिष्टस्यार्थवादस्य स्वार्थे (स्वपक्षे) प्रामाण्यमुपपाद्यानन्तरनिर्दिष्टमन्त्राणां तदुपपादयति [अथेत्यादि]

[मू०] अथ मनवो विधेयपरिबोधनकार्यमुखा-
द्विधिमुपकुर्वते हि दिविषद्वपुरादिधियम्।
उपजनयन्त एनमुपकर्तुमलं खलु ते
कथमिव देवताधियमुपैति वपुर्विधुरा॥ (33)

[व्या०] अथ—अनन्तरनिर्दिष्टाः; यद्वा अर्थवादैः प्ररोचनायां कृतायामनन्तरमनुष्ठानकाले। मनवः—मन्त्राः। विधेयस्य—अनुष्ठेयस्य परिबोधनकार्यमुखात्—प्रकाशनरूपस्वकृत्यद्वारेण। विधिमुपकुर्वते—विधिवाक्यस्य किंचित्कुर्वन्ति। हीति प्रतियोग्यभ्युपगमः सूच्यते। ते—अनुष्ठेयार्थप्रकाशकतयाभ्युपेता मन्त्राः। दिविषदां—देवानां, वपुरादिषु—विग्रहादिषु, धियं—प्रमाम् उपजनयन्तस्सन्तः—प्रथममेव जनयन्तः सन्तः। एनं—सामान्यतो मन्त्रोपकार्यतया पूर्वमुपात्तं विधिम्। उपकर्तुं—तस्य किंचित्कर्तुम्। अलं—समर्थाः, देवताविग्रहादिविषयकप्रमोत्पादन(हेतुक)[द्वारा] विध्युपकारकरा इत्यर्थः। हेतौ शत्रादेशः। खल्विति दुरपह्नवत्वमस्योच्यते।

तदाह—कथमिवेति । वपुर्विधुरा—शरीरादिशून्या । देवता—मन्त्रस्तुत्या यागाद्युद्देश्या च । धियं—स्मृतिम् । कथमुपैति—निर्विशेषायाः स्मृत्यारोहो दुश्शक इति भावः । मन्त्राणामनुष्ठेयार्थप्रकाशकत्वसिद्ध्यर्थं देवताविग्रहादौ द्वारभूते प्रामाण्यमावश्यकम् । अन्यथा वैयर्थ्यं स्यात् । अतो न वाक्यभेद इति भावः । इदमपि भाषितं भगवता "न हि निर्विशेषा देवता धियमधिरोहति"(इत्यत्र) [इति]। पटुतरेत्यादिश्लोकत्रये नर्कुटकं वृत्तम् । 'यतिनियतानजौ भजजला' इति नर्कुटकमित्युक्तेः ॥ (33)

* * * *

[ अव० ] हेत्वन्तरेणापि देवतानां ब्रह्मविद्याधिकारं समर्थयते—[अथेत्यादि]

[ मू० ] अथ सुरनरतिर्यक्स्थावरात्मप्रपञ्च-
प्रजननगणनासु छन्दसामन्तभागे ।
प्रकटतरमधीता विग्रहा देवताना-
मवकलय गतिं चोपासनप्रक्रियासु ॥ (34)

[ व्या० ] अथेति युक्त्यन्तरप्रस्तावे । छन्दसां—वेदानाम् । अन्तभागे—अन्तप्रदेशे ; छान्दोग्यसुबालादिवेदान्तवाक्यविशेषेष्विति यावत् । सुराः—देवताः, नराः— मनुष्याः, तिर्यञ्चः— मृगादयः , स्थावराः—वृक्षादयः त आत्मा स्वरूपं यस्य तथोक्तस्य प्रपञ्चस्य सर्वलोकस्य, प्रजननं—सृष्टिः, तस्य गणनासु बुद्धिविपरिवृत्तिरूपप्रकरणेषु । देवतानां—अग्नीन्द्रादीनां विग्रहाः—शरीराणि । आयुधादेरप्युपलक्षणमिदम् । देवताभेदेन विग्रहभेदात् विग्रहा इति बहुवचनम् । एकस्या अपि देवताया तत्तद्यज्ञेषु अनेकप्रतिपत्तिदर्शनाभिप्रायेण वा बहुवचनम् । प्रकटतरं—स्फुटतरम् । अनेन पराभ्युगतापूर्वव्यावृत्तिः । अश्रुतमपि हि तत्कल्पितम् ; श्रुतं पुनरिदं कथमपलप्यत इति भावः । अधीताः—अवगताः । किं च उपासनप्रक्रियासु—उपासनप्रकरणेषु । गतिं—देवताधिकारप्रतिपादनप्रकारम् । अवकलय—आलोचयेति प्रतिवादिनं प्रत्युक्तिरियम् ॥

अत्र (सदेव सोम्येदत्यादिकं , तन्माध्ये) "पुरुषस्त्र्यक्षः प्राजापत्यः, चन्द्रमा मनसो जातः ; चक्षोस्सूर्यो अजायत; अपानान्निषादाः , ललाटात्क्रोधजो रुद्रः ;

देवो भूत्वा देवानसृजत्; ऋषिर्भूत्वा ऋषीन् यक्षराक्षसगन्धर्वान्" इत्यादिकं द्रष्टव्यम्। "अथ तद्धोभये देवासुराः" इत्यादिकं च ब्रह्मोपासनप्रकरणस्थं द्रष्टव्यम्। तदिदं भाषितं भगवता—"देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषूपासनप्रकरणेषु च श्रूयते" इति। अत्रोत्तरत्र च मालिनीवृत्तम्। 'ननमयययुतेयं मालिनी भोगिलोकैरि' त्युक्तेः॥ (34)

* * * *

[अव०] प्रकारान्तरेणापि तासामधिकारं वदन् देवताविकारं निगमयति—[निगमेत्यादि]

[मू०] निगमशतनिदानैर्दैवताविग्रहादि
स्फुटतरमितिहासैर्धर्मशास्त्रैः पुराणैः।
अपि गदितमनन्तोपासनेऽस्याधिकार-
स्तदयममरवर्गस्तत्फलार्थी समर्थः॥ (35)

[व्या०] निगमशतानि—संकीर्णब्राह्मणमन्त्रार्थवादात्मकानि भूयांसि वेदवाक्यानि, निदानानि—मूलानि येषां तथोक्तैः। इतिहासैः—पुरावृत्तप्रतिपादकश्रीमद्रामायणादिभिः। धर्मशास्त्रैः—मनुयाज्ञवल्क्यविष्णुप्रभृतिप्रोक्तसदाचारादिप्रतिपादकहितानुशासनग्रन्थविशेषैः। पुराणैः—सर्गादिप्रतिपादकपुराणरत्नप्रभृतिभिः। अपि, देवताविग्रहादि—यागोद्देश्यभूतेन्द्रादिशरीरादिकम्। स्फुटतरं—द्वारद्वारिभावेन वाक्यभेदपरिहारनिरपेक्षम्। गदितं—पठितम्। न श्रुत्यर्थापत्त्या कल्पनमिति भावः। मानान्तरप्रतिरोधाभावात् नात्र विरोधाधिकरणन्यायप्रवृत्तिरिति भावः। (अत्र यज्ञागृहाराध्यायादिकमनुसन्धेयम्)। यत एवं ततः अयं—प्रमाणप्रसिद्धदेहेन्द्रियादिः। अमरवर्गः—ब्रह्मादिदेवतागणः। तत्फलार्थी—बुद्धिस्थोपासनफलमोक्षाद्यर्थी। समर्थः [तत्—तस्मात्; "ब्रह्म बृहस्पतिः" इत्याद्युक्तब्राह्मण्यादियोगेन भवान्तराधिगतविद्याप्रबोधेन वा वैदुष्यात्, यागानुष्ठानादिनाऽग्निमत्त्वात्, इन्द्राद्यैश्वर्यस्य क्षयित्वादिश्रवणान्निरतिशयानन्दमुक्तैश्वर्यापेक्षित्वसंभवात्, मन्त्रार्थवादयोः स्वार्थप्रामाण्येन वेदान्तेषु सृष्टिप्रकरणेषूपासनाप्रकरणेषु च विग्रहादिश्रवणात्, विप्रकीर्णवेदमूलेषु इतिहासादिषु देवताविग्रहादिप्रतिपादनात्, मानान्तरविरोध-

विरहात्, अङ्गापूर्वन्यायेन देवताप्रसादानां परमापूर्वस्थानीयपरमात्मप्रसाद-द्वारत्वाश्रयणेन पूर्वपूर्वेन्द्रादिशरीरकपरमात्मन एव प्रसादद्वारा फलप्रदत्वेन कृतहानाकृताभ्यागमप्रसंगविरहाच्चेत्यर्थः ।] ("ब्रह्म बृहस्पतिः" इत्याद्युक्तब्राह्म-ण्यादियोगेन, भवान्तराधिगतविद्याप्रबोधेन वा वैदुष्यात्, अग्निमत्त्वाच्च शक्तो भवतीति । यत्तस्मात् इन्द्राद्यैश्वर्यस्य कर्मविशेषफलत्वश्रवणात्, तद्वशीकारस्य च तत्त्वश्रवणात्, मन्त्रार्थवादयोः स्वार्थे प्रामाण्यात्, वेदान्तेषु सृष्टिप्रकरणेषु उपासनप्रकरणेषु च देहेन्द्रियादिश्रवणात्, विप्रकीर्णवेदमूलेषु इतिहासादिषु देवताविग्रहादिप्रतिपादनात्, मानान्तरविरोधविरहात् अङ्गापूर्वन्यायेन देवता-प्रसादानां परमापूर्वस्थानीयपरमात्मप्रसादद्वारत्वाश्रयणेन प्रतिमाप्रतिमेयन्यायानवा तारात् कल्पान्तरे च पूर्वपूर्वेन्द्रादिशरीरकपरमात्मन एव प्रसादद्वार-फलप्रदत्वाश्रयणेन कृतहानाकृताभ्यागमप्रसङ्गविरहाच्चेत्यर्थः) अस्य-अमरवर्गस्य । अनन्तोपासने देशकालवस्तुपरिच्छेदरहितभगवदुपासने अधिकारः अनुष्ठानप्रयत्न-फलस्वाम्यम् । अस्तीति शेषः ॥

अमरपदेन, अनन्तपदेन च, यद्यप्यमरा अस्मदाद्यपेक्षया चिरकालस्थायिनः प्रकृष्टैश्वर्ययुक्ताश्च; तथाप्यपरिच्छिन्नब्रह्मानन्दानुभावविरहात् तेषां तदपेक्षा तदुपाया-नुष्ठानं च युज्यत एवेति सूच्यते । वर्गपदेन च, व्यवधानेन, साक्षाद्वा मोक्षार्थिन्यो वस्वादिदेवतास्तदन्यदेवताश्च विवक्षिताः । अत एव मोक्षकाङ्क्षिण्यनुक्तिरिति ध्येयम् ॥ (35)

*    *    *    *

[ मू० ] [ तत्रैवाधिकरणे ]

[ व्या० ] तत्रैवाधिकरण इति । देवताधिकरण इत्यर्थः । "शब्द इति चेन्नातः प्रभवा-त्प्रत्यक्षानुमानाभ्याम्" इति सूत्र इति । शेषः । तत्र हि इन्द्रादिशब्दानां अर्थशू-न्यत्वादिपरिहाराय व्यक्तिविशेषसङ्केतितत्वनिरासेनाकृतिवाचकत्वं साधितम् ॥

*    *    *    *

[ अव० ] तत्र परैराकृतेस्संस्थानातिरेकाभ्युपगमात्तत्र दोषदर्शनात्संस्थानस्यैवानुगत-प्रतीत्यादिप्रयोजकत्वसंभवाच्च तस्यैवाकृतित्वं साध्यते (अवयवसंस्थानमेव जातिरिति यावत्) [ संस्थानमित्यादि ]

[मू०] संस्थानं कलयाकृतिं त्वनुगतं तावत्प्रतीमो हि त-
द्ब्रूमश्चापरमप्यदर्शि न तथा पक्षान्तरे जातिषु।
यद्वद्गोत्वपुरस्सरीषु धिषणा बह्वीषु साधारणी
जातिर्जातिरितीदृशी फणितिरप्येवं मदीये पथि॥ (63)

[व्या०] तुशब्द एवकारार्थो भिन्नक्रमः। संस्थानं त्वाकृतिं कलय—संस्थानमेवाकृतिंकलय। एवकारः प्रसिद्धिपरः। उभयाभ्युपेतमवयवसंयोगविशेषं जातिं स्वीकुर्वित्यर्थः। यद्वा वैषम्ये तुशब्दः। संस्थानस्य क्लृप्तत्वदृष्टत्वाभ्यां पराभ्युपेतजातेर्वैषम्यं विवक्षितम्। अतिरेकवादेऽपि व्यञ्जकत्वाय संस्थानमावश्यकं, दृश्यते च तदिति, क्लृप्तं दृष्टं च संस्थानमिति तेनैवानुगतप्रतीत्याद्युपपत्तेर्नातिरिक्तजातिस्वीकार उचित इति भावः। आकृतिरत्र सामान्यम्। "जात्याकृति" इत्यत्र त्ववयवसंस्थानमाकृतिः। नातस्सिद्धसाधनम्। संस्थानं नाम वस्तुनः स्वासाधारणं रूपमिति भाष्यम्। अत्र स्वशब्दः प्रकृतपरः। रूपमपृथक्सिद्धविशेषणम्। घटस्य द्रव्यत्वं संस्थानं मा भूदित्यसाधारणपदम्। प्रकृतत्वं च तत्तद्व्यवहारगोचरतया बुद्धिस्थत्वम्। गोत्वं गां प्रति, खण्डत्वं खण्डं प्रति, खण्डगवं प्रति तु खण्डत्वविशिष्टगोत्वं संस्थानम्। एतादृशसंस्थानमेव जातिनिर्वाहकमिति न तद्व्यङ्ग्यजात्याख्यपदार्थान्तरस्वीकार उचित इत्यर्थः। ननु गोत्वजातेस्संस्थानाभिव्यङ्ग्यत्वान्न संस्थानस्यैव जातित्वमिति चेन्न। विकल्पासहत्वात्। किं संस्थानातिरेकिणो दृश्यत्वादेवमुच्यते, उत कल्प्यत्वेनेति। नाद्यः। संस्थानव्यतिरेकेणानेकेषु एकाकारबुद्धिबोध्यवस्त्वप्रतीतेः। अनुवृत्तप्रत्ययबोध्यं हि सामान्यम्। संस्थानस्यैवानुवृत्तबुद्धिबोध्यत्वात्। नापि द्वितीयः—संस्थानेनैव तद्व्यवहारोपपत्तेः। कल्पकं ह्यन्यथासिद्धम्। अतो नातिरिक्तजातिरिति।

तदिदमाह—अनुगतं तावदित्यादिना। तत्—संस्थानम्। अनुगतं प्रतीमः, ब्रूमश्च [व्यवहरामश्च] (अनुगतप्रतीतिव्यवहारविषयी कर्म च) तावच्छब्दः क्रमार्थः। अनुगतप्रतीत्यन्यथानुपपत्त्या हि जातिः कल्प्या। सा तु संस्थानानुगमेनान्यथासिद्धेत्यर्थः। दर्शनादपि कल्पने

परस्य संरम्भातिशय इति प्रथमं तन्निरासः । हिशब्देन संस्थानानुगमस्य प्रसिद्धिरुच्यते । अथ दर्शनं निरस्यति—अपरमिति । अस्माभिरित्यादिः । अस्माभिस्त्वया मया अन्यैश्च । अपरं—संस्थानातिरिक्तं जात्याख्यं वस्तु । नाप्यदर्शि--नापि दृष्टमित्यर्थः । तथाशब्दः कल्पनाव्युदासस्य दृष्टान्तत्वपरः । यथा न कल्पनं तथा न दर्शनमित्यर्थः । अत्र व्यासपादाः—"अयं सास्नादिमान् अयमपि सास्नादिमान्, अयं पृथुबुध्नोदराकारः अयमपि पृथुबुध्नोदराकार इति सास्नादिरेवानुवृत्तबुद्धिव्यवहारविषयो दृश्यते । तदतिरिक्तोऽनुवृत्तधीव्यवहारविषयो न कश्चिद्दृश्यत" इत्यनुजगृहुः । ननु व्यावृत्तं संस्थानमनुवृत्तधीव्यवहारयोः कथं विषय इत्यत्राह—पक्षान्तर इत्यादि । यद्वत्—यथा । पक्षान्तरे—अतिरिक्तजातिवादे । बह्वीषु—अनन्तासु । गोत्वाश्वत्वपुरस्सरीषु—गोत्वाश्वत्वादिकासु जातिषु, पराभ्युपेतसामान्येषु । साधारणी—समाना । जातिर्जातिरिति धिषणा—जातिर्जातिरित्येकाकारा प्रतीतिः । ईदृशी फणितिरपि—जातिर्जातिरित्येकाकारव्यवहारोऽपि भवति । मदीये पथि—संस्थानजातिवादे । एवं जातौ जातिप्रतीतिवत् सौसादृश्यमूलिकेत्यर्थः । अत्र गौर्गौरित्यनुगतप्रतीतिरनुगतशब्दश्चेति शेषः । जातिषु जातित्वप्रकारकप्रतीतिव्यवहारवदेव गवादिष्वपि गोत्वादिप्रकारकप्रतीतिव्यवहारोपपत्तिरिति भावः । जातिष्वित्युपलक्षणम् । व्यक्त्यादिष्वपीति । यथा व्यक्तित्वजातिविरहेऽपि बह्वीषु व्यक्तिषु व्यक्तिशब्दप्रयोगः, यथावा खण्डादिषु खण्डत्वजात्यभावेऽपि खण्डशब्दप्रयोगः; यथा च नित्यद्रव्येषु विशेषमिच्छतां विशेषत्वजातिविरहेऽपि विशेषेषु विशेषशब्दप्रयोगः; तद्वत् गवादिशब्दप्रयोगोपपत्तिरिति । ननु किमिदं सौसादृश्यमिति चेदत्र व्यासपादाः— सदृशव्यवहारासाधारणहेतुर्विषयधर्मस्सादृश्यम् । स च भ्रातृत्ववत् प्रतियोगिनिरूप्यपदार्थः प्रतिव्यक्तिव्यावृत्तः । अतो न(व्या)वृत्तिविकल्पादिदौर्घट्यम् । निर्दिष्टाकारपौष्कल्यतस्सादृश्यं सौसादृश्यमित्याहुः । मेघनादारिसूरिभिश्च अथ सास्नादीनां क उपाधिरिति चेत् —संस्थानसादृश्यमेवेति ब्रूम इत्युक्तम् ॥ (36)

* * * * *

[ अव० ] इमावेव पूर्वपक्षसिद्धान्तौ विस्तरेण श्लोकत्रयेणाह—

[मू०] एका व्यक्तिषु भूयसीष्वनुगता पूर्णा प्रतिव्यक्ति या
संस्थानादपरा निरादिनिधना सा जातिरास्थीयताम् ।
गौर्गौरित्यनुवृत्तबुद्धिवचसी नो चेद्धटेते कथं
व्युत्पत्तिश्च कथं गवादिवचसां व्यक्तिष्वसंख्यासु नः ॥ (37)

[व्या०] या भूयसीषु व्यक्तिषु, अनुगता—अनुवर्तमाना। प्रतिव्यक्ति—व्यक्तौ व्यक्तौ। पूर्णा--परिसमाप्य वर्तिनी। निरादिनिधना—आदिरुत्पत्तिः, निधनं नाशः, ताभ्यां निर्गता । "[1] निरादयः क्रान्ताद्यर्थे" इति समासः । अनेन प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपं नित्यत्वमुक्तम्। एका--सर्वासु व्यक्तिष्वभिन्ना। या एवंविधा भवति सा संस्थानादपरा जातिः—उभयाभ्युपगतसंस्थानातिरिक्ता जातिः । आस्थीयतां—प्रतिज्ञायतां, वक्ष्यमाणानुगतप्रतीत्याद्यन्यथानुपपत्त्या कल्प्यताम् । प्रतिज्ञा हि साध्यविशिष्टपक्षबोधनम्। आङ्पूर्वकस्तिष्ठतिः प्रतिज्ञायां वर्तते। [2] 'आङः प्रतिज्ञायाम्' इत्युक्तेः। अनेन 'नित्यमेकमनेकानुगतं सामान्यमि'ति सामान्यलक्षणमुक्तं भवति। पूर्णेत्यनेन वृत्तिविकल्पः प्रतीतिपराहत इत्युक्तं भवति। संस्थानादपरेत्यनेन संस्थानस्य नित्यत्वाद्यनुपपत्त्या तदतिरिक्तजात्युपगम आवश्यक इत्युक्तं भवति। अथ हेतुमाह—गौर्गौरित्यादिना। नो चेत्—पूर्वोक्तजातिर्नाभ्युपेयते चेत् । गौर्गौरित्यनुवृत्तबुद्धिः अनुवृत्तवचश्च, कथं घटेते—कथमुपपन्ने स्याताम् । अनुगतप्रतीतिव्यवहारयोरनुगतधर्मं विनानुपपत्तेः ताभ्यां तादृशधर्मसिद्धिरित्यर्थः । गवादिवचसां—गवादिशब्दानाम् । असंख्यासु—अनन्तासु, व्यक्तिषु। नः असर्वदर्शिनामस्माकम्। व्युत्पत्तिः—शक्तिग्रहः। कथं--घटत इत्यर्थः। सर्वोपसंहारेण शक्तिग्रहसिद्ध्यर्थं जातिरावश्यकीत्यर्थः। चकारेण व्याप्तिग्रहणं, कार्यकारणभावग्रहणं, शुक्त्यादौ रजतादिभ्रमः, गवादिशब्दानां प्रथमेतरव्यक्तिषु गौणताविरहश्च समुच्चीयते । सर्वस्याप्यस्याननुगतसंस्थानेनानिर्वाहात् ॥ (37)

* * * *

1 वार्तिकम्.

2. वार्तिकम्.

8

[ अव० ] सिद्धान्तं विस्तृणीते द्वाभ्यां—

[ मू० ] अत्र ब्रूमः प्रतीमः किमपि किमपरं वस्तु सास्नादिमत्त्वा-
द्गोत्वं नामानुवृत्तव्यवहृतिविषयं तद्धि तादृक्षमैक्षि।
गोत्वाऽजत्वाऽश्वतादिष्वनुगतमपरं वस्तु जातिष्वनेका-
स्वेकं जात्यादिशब्दव्यवहृतिघटकं जातिवादे किमूचे ॥(३४)

[ व्या० ] अत्र ब्रूमः-अस्मिन् पूर्वपक्षे सिद्धान्तं वदामः। सास्नादिमत्त्वादपरं— संस्थानातिरिक्तम्। सास्ना गळकम्बळः। आदिना शृङ्गादिपरिग्रहः। अनेन संस्थानमुच्यते। संस्थानातिरिक्तं गोत्वं नाम—गोपदप्रवृत्तिनिमित्तत्वेन सिद्धं किमपि अपरम्, अनुवृत्तव्यवहृतिविषयं-अनुगतव्यवहारगोचरम्। द्वितीया-न्तमिदम्। वस्तु प्रमाणसंबन्धार्हं, कर्म। [किं] प्रतीमः-किं प्रतीतिविषयीकुर्मः। किं क्षेपे (अयं किंशब्दः) न पश्यामः; दर्शनाभावान्नातिरिक्तजातिरित्यर्थः। तर्हि व्यवहारान्यथानुपपत्त्या कल्प्यत इत्यत्राह-तद्धीत्यादि। तत्-संस्थानम्। तादृक्षं—सौसादृश्येनानुगतव्यवहारादिप्रयोजकम्। ऐक्षि-दृष्टमित्यर्थः। अनेन कल्पनान्यथासिद्धिरुक्ता। हिः प्रसिद्धौ। व्यञ्जकत्वाय सौसादृश्यं परेणापि पुरस्कृतमिति भावः॥

सौसादृश्यविशिष्टसंस्थानेन व्याप्तिग्रहणादिकं सुशकम्। भ्रमोत्पत्तिश्चा-विरोधिसंस्थानप्रतिपत्तौ सुलभा। तन्निवृत्तिश्च विरोधिसंस्थानप्रतीत्या सुलभा। सादृश्यलेशो गौणतापादकः, सौसादृश्यं तु मुख्यतापादकम्। अतस्सौसादृश्यविशिष्टसंस्थाने-नोपपत्तौ नातिरिक्तकल्पनमित्यर्थः। अत्र व्यासपादाः—"कस्मिंश्चिदर्थे कस्यचिच्छ-ब्दस्य व्युत्पत्तिः तत्सुसदृशेऽर्थे सुसदृशस्य तस्यैव शब्दस्य प्रयोगहेतुरिति यथा-दर्शनमभ्युपगन्तव्यम्। अप्रतिपन्नमर्थान्तरं कल्पयित्वा वृत्तिविकल्पादिदोषाणां प्रतीतिशरणतया परिहारादपि परिदृष्ट एव वस्तुनि प्रतीतिबलेन चोद्यपरिहारौ लाघवन्यायादुपपद्येते" इति। परिदृष्टं च वस्त्विह संस्थानसौसादृश्यम्। अत्र सौसादृश्येनैकीकृतेन संस्थानलक्षणाकारेण सर्वेषां क्रोडीकारसंभवादिति भावप्रका-शिकायामुक्तम्। महाभाष्येऽपि प्रत्याहाराह्निके, "रूपसामान्यात् (रूपसामान्याद्वा) सिद्धमेतत्; तद्यथा—तानेव शाटकानाच्छादयामः; तानेव शालीन् भुञ्ज्महे; ये

मधुरायां ये मागधेषु तदेव भवतः कार्षापणं ; यन्मधुरायां गृहीतं अन्यस्मिंश्चान्यस्मिंश्च रूपसामान्यात्तदेवेदमिति भवति" इत्युक्तम्। कैयटेन च "व्यक्तिनिर्देशेऽपि भेदापरामर्शेन लोकवदभेदव्यवहारोऽस्तीति सिद्धमिष्टम्। व्यक्तिव्यतिरिक्तं तु सामान्यं भवतु वा मा वा भूत् सर्वथा लोक इव शास्त्रे व्यवहार" इत्युक्तम्। कौस्तुभेऽपि 'इहोच्चारितोकारादिः सुसदृशीः षड्व्यक्तीः सादृश्याख्यसंबन्धेन उपस्थापयति" इत्युक्तम्। अतः सादृश्यस्य व्यक्त्यन्तरसंग्राहकत्वं सामान्यकार्यधुरीणत्वं च सर्वसंमतम्। तदिदमभिप्रेत्य 'तद्धि तादृक्षमैक्षी' त्युक्तम् ॥

अनुवृत्तव्यवहारादौ व्यावृत्तसंस्थानस्य कथं प्रयोजकत्वमित्याशङ्क्य, जातिषु जात्यन्तरविरहेऽपि जातिव्यवहारस्य यथातिरिक्तजातिवादे सौसादृश्येनोपपत्तिः; तद्वत् संस्थानजातिवादेऽपि संस्थानसौसादृश्येनोपपत्तिरिति परिहाराभिप्रायेणाह—गोत्वाऽजत्वाऽश्वतादिष्वित्रति। अनेकासु[जातिषु] गोत्वादिजातिषु। अनुगतं—वर्तमानम्। एकं साधारणम्—जात्यादिशब्दव्यवहृतिघटकं—जात्यादिव्यवहारप्रयोजकम्। अपरं वस्तु जात्यन्तरात्मकं वस्तु, सौसादृश्यातिरिक्तं वा वस्तु। जातिवादे—अतिरिक्तजातिपक्षे। ऊचे किं—स्वीकृतम् किम्? । क्षेपवाची किंशब्दः; । न स्वीकृतं हीत्यर्थः। तथा च तद्वदेव गवादिशब्दानामपि व्युत्पत्तिः सौसादृश्येनैव उपपद्यत इति भावः ॥ (38)

* * * *

[मू०] अन्यस्यादर्शनेन व्यवहृतिघटनस्यान्यथैवोपपत्त्या
कल्प्यत्वासंभवेनाप्युभयसमयसंगीतसंस्थावलम्बी।
युक्तो जात्यादिशब्दः सुसदृगिह मिथः सा ह्यनुस्यूतधीवा-
ग्व्युत्पत्त्यैव यादृक्परसमयमतामाकृतिं सा व्यनक्ति ॥ (39)

[व्या०] अन्यस्य—संस्थानातिरिक्तस्य जात्याख्यस्य। अदर्शनेन, अनेन दर्शनं नेत्युक्तम्। कल्पनं व्युदस्यति—व्यवहृतीति। व्यवहृतिघटनस्य—व्यवहारानुगमस्य। अन्यथैवोपपत्त्या—उभयाभ्युपेतसंस्थानसौसादृश्येनैवोपपत्त्या। यः कल्प्यत्वासंभवः तेनापीत्यर्थः। दर्शनाभावादनुमेयत्वासंभवाच्चेत्यर्थः। जात्यादिशब्दः—गवादिशब्दः। आदिना शुक्लादिशब्द-

परिग्रहः। जात्यजातिसाधारणं हि संस्थानं निरुक्तम्। **उभयसमयसंगीतसंस्थावलम्बी युक्तः**—संस्थानजातिवादातिरिक्तजातिवादात्मकपक्षद्वयाभ्युपगतसुसदृशसंस्थानकृतानुगमकः सन्नुपपन्न इत्यर्थः। जात्यादीनां शब्द इति षष्ठीतत्पुरुषः। अतो गवादिशब्दलाभः। **इहेत्यादि**—**इह**—संस्थानजातिवादे। **मिथः**—अन्योन्यम्। **सुसदृक्**—सौसादृश्यवती। [सा] संस्था, संस्थानम्। **अनुस्यूतधीवाग्व्युत्पत्त्यर्हैव**—अनुगतप्रतीतिव्यवहारशक्तिग्रहजननादियोग्यैव। भवतीति शेषः। **हीति** प्रसिद्धौ। **यादृक्सा**—यत्सौसादृश्यविशिष्टंसंस्थानम्; कर्तृ। **परसमयमतां**—परमतस्वीकृताम्। **आकृतिं**—संस्थानातिरिक्तजातिम्। **व्यनक्ति**—व्यञ्जयति। तादृक्संस्थानम् अनुस्यूतधीवाग्व्युत्पत्त्यर्हमिति पूर्वेणान्वयः। सौसादृश्यविशिष्टसंस्थानस्य परमते जातिव्यञ्जकत्ववत् अस्मत्पक्षेऽनुगतबुद्ध्यादिहेतुत्वं संभवतीत्यर्थः॥

सुसदृशावयवसंयोगविशेषरूपसंस्थानस्य जात्यभिव्यञ्जकत्वं हि परैरप्यास्थेयम्। तदुक्तं मेघनादारिसूरिभिः—'अभिव्यङ्ग्यत्वपक्षेऽप्ययं परिहारः समः। गवयादौ न कथं गोत्वादेरभिव्यक्तिरिति चोदिते; तत्राभिव्यञ्जकावयवाभावादित्युत्तरे दत्ते; कथं तत्र तदभिव्यञ्जकावयवाभाव इति पुनश्चोदिते; सुसदृशावयवाभावादित्येवोत्तरं स्यादि'ति। आकृतिग्रहणा जातिः अनुगतसंस्थानव्यङ्ग्येत्यर्थः इति च तान्त्रिकैरुक्तम्। अतस्सौसादृश्यविशिष्टसंस्थानस्य जात्यभिव्यञ्जकत्ववदनुगतप्रतीत्यादिनिर्वाहकत्वं संभवतीति भावः। सादृश्यस्य क्लृप्तपदार्थेषु अन्तर्भावो बहिर्भावो वाऽस्तु। सर्वथापि क्लृप्तसादृश्येनोपपत्तौ अतिरिक्तजातिकल्पनं गौरवपराहतमिति हृदयम्। सिद्धान्ते तु सादृश्यं नातिरिक्तम्। 'अद्रव्यं, सत्त्वरजस्तमश्शब्दस्पर्शरूपरसगंधसंयोगशक्तिभेदात् दशैवे'त्युक्तत्वात्। मेघनादारिसूरिभिस्तु—"शक्तिसङ्ख्यासादृश्यानि गुणेऽन्तर्भूतानि" इत्युक्तम्। तथा "शक्तिसादृश्यपरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वाश्रयाश्रयिभावादयः, चिदचित्साधारणा गुणाः" तैरेवोक्तम्। तद्गतभूयोधर्मवत्त्वं सादृश्यमिति पक्षेऽपि, सादृश्यभूता ये भूयांसो धर्माः तदतिरिक्तं तदतिरिक्तवस्त्वभिव्यङ्ग्यं जात्याख्यं वस्त्वङ्गीक्रियत इति गौरवम्। अस्माकं तु तैरेव धर्मैरनुगतव्यवहारसिध्याश्रयणात् लाघवम्। तद्गतधर्मेषु सादृश्यं, सदृशावयवेषु व्यञ्जकत्वं, व्यक्तिषु जातिरिति त्रयाणां वृत्तिविकल्पादेः प्रतीतिशरणतया परिहारः परमते। अस्मन्मते तु तद्गतेषु धर्मेषु सादृश्यं, सादृश्यवदवयवेषु अनुगतव्यवहारप्रयोजकत्वं चेति द्वयोरेव वृत्तिविकल्पादेः प्रतीतिशरणतया परिहार इति लाघवम्

सादृश्यं गुण इति पक्षेऽपि, सादृश्यस्यावयवेषु, सदृशावयवेषु अनुगतप्रतीति-प्रयोजकत्वस्य चेति द्वयोरेव प्रतीतिबलेन तत्परिहार इति लाघवमस्त्येव। यद्यपि सादृश्यं प्रतिव्यक्ति व्यावृत्तम्; तथापि व्यावृत्तस्यापि तस्यानुवृत्तधीहेतुत्वं स्वभावादेवोपपद्यते; यथा परमते व्यावृत्तानामनुवृत्तजातिव्यञ्जकत्वं तद्वत्। तदुक्तं जातिप्रतीत्यभावाच्चाभिव्यञ्जकत्वमिति केषांचित्संस्थानानामेव गोत्वाद्यभिव्यञ्जकत्वं स्वभाव इति वा। एवमत्रापि गवयादौ तत्संस्थानाद्गोत्वाद्यप्रतीतिस्स्वभावादेवेति ॥ (39)

* * * * *

[अव०] प्रथमसूत्रभाष्ये "अतो वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षम्" इति वाक्ये अर्थद्वयमुक्तम्; वस्तुसंस्थानरूपा जातिः; जातिरेव भेद इति च। तत्र संस्थानमेव जातिरित्ययमर्थः "संस्थानातिरेकिणः" इत्यादि-भाष्येणोपपादितः। जातिरेव भेद इत्ययमर्थश्च "जातिग्रहणेनैव भिन्न इति व्यवहारसंभवात्" इत्यादिभाष्येणोपपादितः। तत्र गोत्वादिव्यतिरिक्त-भेदमङ्गीकुर्वता परेणापि अभावाभावे, प्रतियोगिनिरपेक्षभावरूपपदार्थस्यैव प्रतियोगिसापेक्षाभावत्वमङ्गीकृतम्। अन्यथानवस्थानादनुपलम्भाच्च। तद्वद्भेद-स्यापि प्रतियोगिनिरपेक्षभावरूपगोत्वादिरूपत्वं संभवतीत्युक्तम्। तत्र तुल्यन्याय-तया संसर्गाभावस्यापि भावरूपत्वमभिप्रेतम्। तदिदं संस्थानजातिनिरूपण-प्रसंगादाह द्वाभ्याम्—[अभावस्येत्यदिना, संसर्गेत्यादिना च]

[मू०] अभावस्याभावो भवति खलु भावः परमते
घटादेरप्येवं कथय किमभावो न भवति।
घटस्य प्रध्वंसो भवति हि कपालत्वमपर-
स्त्वभावः पिण्डत्वं किमिह ददृशे किंचिदपरम् ॥ (40)

[व्या०] अभावस्येत्यादि। परमते—नैयायिकादिमते। अभावस्याभावः—घटा-भावाभावः भावो भवति खलु—भावरूपघटात्मकः अभ्युपगतः किल। अन्यथानवस्थानादनुपलम्भाच्चेति भावः। एवं—घटाभावाभावस्य घटात्मकत्ववत्। घटादेरभावोऽपि भावः—भूतलरूपादिविशेषरूपः। किं न भवति—कुतो न भवति, भवत्येवेत्यर्थः। प्रतियोगिसापेक्षस्याभावस्य प्रतियोगिनिरपेक्ष-

भावरूपत्वमनुपपन्नमित्यनुपपत्तिर्हि तेनातिरिक्ताभावे हेतूकर्तव्या । सा घटाभावाभावस्य घटात्मकत्वं वदता तेनैव निराकृतेति कल्पकाभावान्नातिरिक्ताभावक्लृप्तिरिति भावः । घटस्येत्यादि । सत्कार्यवादाभ्युपगमात्, [घटस्य प्रध्वंसः कपालत्वं भवति] घटध्वंसः कपालत्वावस्थारूपः । अपरस्त्वभावः-घटप्रागभावः । [पिण्डत्वं] पिण्डत्वावस्थारूपः । हिशब्दः प्रसिद्धौ । घटप्रागभावध्वंसस्य घटसत्ताकाले घटरूपत्वं तेनाङ्गीकृतम् । तथा घटध्वंसप्रागभावस्य घटसत्ताकाले घटरूपत्वं च तेनाङ्गीकृतम् । तस्मात् ध्वंसप्रागभावयोरपि भावरूपत्वमुपपन्नमिति भावः । तर्हि दर्शनबलात्तत्सिद्धिरित्यत्राह — **किमिह ददृशे किंचिदपरम्** । इह—भूतलकपालपिण्डेषु । **अपरं किंचित्** — भूतलरूपादिविशेषाद्यतिरिक्तं संसर्गाभावरूपं वस्तु । **ददृशे किं**—किं दृष्टं, 'न दृष्टमित्यर्थः । तथा चोपलम्भानुपपत्त्योरभावान्नातिरिक्ताभावसिद्धिरिति भावः ॥ (40)

* * * * *

[ अव० ] ननु घटाभावस्य भूतलरूपाद्यात्मकत्वे घटसन्निधिकाले भूतलरूपस्य नाशापसरणयोरभावेनाभावप्रत्ययः स्यादित्याशङ्क्यातिरिक्ताभाववादेऽपि तदा नित्यस्य निष्क्रियस्य तस्य नाशापसरणयोरभावादभावप्रतीतिस्स्यात्, यदि घटसत्ताकालावच्छिन्नभूतलस्याभावीयविशेषणतासंसर्गविरहान्न तद्ग्रह इत्युपेयते; तर्हि तत्कालावच्छिन्नभूतलरूपादेः घटाभावानात्मकत्वोपगमान्नानुपपत्तिरित्याह —

**[ मू० ] संसर्गाभावमेवं विदुरिह सुधियो भावमेव त्वभावं**
**मन्वानाः कुम्भवद्भूतलत इतरभूभागभेदस्त्वभावः ।**
**यस्तत्तत्कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेशः**
**कुम्भाभावाश्रयोऽन्यैरगणि स इह नः क्वाधिकस्योपलम्भः ॥(41)**

[ व्या० ] **भावमेव त्वभावं मन्वानाः सुधियः**—उभयाभ्युपगतभूतलरूपादिरूपमेव घटाभावं प्रामाणिकत्वेन निश्चिन्वानाः, परमपुरुषकटाक्षाधीनसमीचीनप्रज्ञायुक्ता अस्मदाचार्याः । **इह**—अभावस्य भूतलरूपादिरूपत्वे घटसत्तादशायामपि घटाभावः प्रतीयेतेति शङ्कायाम् । **संसर्गाभावं, एवं विदुः**—वक्ष्यमाण-

प्रकारविशिष्टं स्वीकुर्वन्ति । तुशब्दः क्लृप्तत्वदृष्टत्वरूपवैषम्यद्योतकः । एव-कारेण अभावेषु कस्यचिद्भावरूपत्वम् अन्यस्य त्वभावरूपत्वमिति पराभ्युपगतमर्ध-जरतीयं व्यावर्त्यते । वक्ष्यमाणप्रकारः क इत्यत्राह—कुम्भवद्भूतलेति । (घटाधिकरणभूतलादिकभूभागभेद इतरभूतलगतविशेषः) [कुम्भवद्भूतलतः—घटाधिकरणभूतलात्, इतरभूभागभेदस्तु—व्यतिरिक्तभूतलविशेष एव] । तुशब्दः एवकारार्थः । अभावः—कुम्भाभाव इत्यर्थः । घटाधिकरण-भूतलभिन्नभूतलरूपादिरूपो घटाभाव इत्यर्थः । अत्र परमतं दृष्टान्तयति—य इत्यादि । अन्यैः—अतिरिक्ताभाववादिभिः । यः, तत्तत्कालभेदेन—घटानधिकरणकालविशेषेण, व्यतिकरितः अवच्छिन्नः, गृहप्राङ्गणादिप्रदेशः-अङ्गणं—चत्वरम् । कुम्भाभावाश्रयोऽगणि—घटाभावाधिकरणत्वेन स्वीकृतः । घटानधिकरणकालावच्छिन्नभूतलस्यैव घटाभावसंसर्गत्वाङ्गीकारा-दिति भावः । सः—तद्देशकालवर्ती घटानधिकरणकालावच्छिन्नगृहाङ्गणरूपा-दिरेव । नः—अस्माकम् । इह—अभावस्थाने । अत्र भवतीति शेषः । स हि स न इति पाठे स हि—प्रदेशः । नः— अस्माकं मते । सः—कुंभा-भाव इत्यर्थः । हिशब्दो दार्ढ्ये । तद्देशवर्ती रूपादिरेवास्माकं घटाभाव इत्यर्थः । अधिकस्य—अतिरिक्तस्याभावस्य । उपलम्भः क्व— न क्वापीति भावः । प्राभाकरमते अधिकरणस्यैवाभावत्वाङ्गीकारात् भूतले घटो नास्तीति आधाराधेयभावप्रतीतेर्भ्रान्तित्वम् । अस्माकं तु भूतलादिवृत्तिरूपाद्यात्मकत्वस्य घटाभावेऽभ्युपगमात्तत्प्रतीतेः प्रमात्वमिति ध्येयम् । इतरभूभागशब्द इतरभू-वर्त्तिपरः । स इति च तद्वर्तिपर इति कपालत्वं पिण्डत्वमिति पूर्वानुसाराज्ज्ञायते । तत्रापि 'कपाले घटो ध्वस्तः' 'इह मृत्पिण्डे घटो भविष्यति' इति प्रतीत्योः प्रमात्वमित्यभिप्रेतम् ॥ (41)

* * * *

[अ०] जातिगुणवाचिपदयोर्व्यक्तिगुणिपर्यन्ताभिधानमाकृत्यधिकरणसिद्धम् । जात्यादि-मात्रशक्तत्वं तु न सूत्रारूढम् । किं त्वर्वाचीनव्याख्यातृभिरुक्तम् । अत्र शरीर-वाचिशब्दानामाकृत्यधिकरणन्यायविषयतानिरूपणपराणि—"अवस्थितेरिति काश-कृत्स्नः" "अंशो नानाव्यपदेशात्" "चराचरव्यपाश्रयस्तु" इत्यादीनि सूत्राणि । अत्र 'तत्त्वमसि' 'सर्वं खल्विदं ब्रह्म' इत्यादिषु चिदचित्प्रकारित्वं

प्रातिपदिकबोध्यम् । ("चराचरव्यपाश्रयः" "अंशो नानाव्यपदेशात्" इत्यादिभिरुल्लापितादाकृत्यधिकरणन्याया) तत्र समानविभक्त्या त्ववस्थाद्वयविशिष्टवस्त्वैकत्वमुच्यते अरुणाधिकरणनयादिति सिद्धान्तः । अत्र पूर्वश्लोकेषु आकृतिशब्दार्थो निरूपितः । अस्मिन् श्लोके आकृत्यधिकरणन्यायः शरीरवाचिषु प्रवर्तते, चराचरेत्यादिसूत्रादित्युच्यते । उपरितनेषु त्रिषु श्लोकेषु अरुणाधिकरणनयाद्विशिष्टवस्त्वैक्यं सामानाधिकरण्यार्थं इति उच्यते । (अवस्थितेरित्यंशो नानेत्यादिसूत्राति उच्यत इति शेषः) ॥

[मू०] सच्च त्यच्चेति सृष्ट्वा विशसि चिदचितौ तेन चोक्तोऽसि विश्वं
त्वज्ञत्वात्त्वल्लयत्वात्त्वमिति च निखिलं त्वच्छरीरं किलेति ।
तैस्तैश्शास्त्रैरभेदव्यवहृतिहृदयं विस्तृणानैर्निरस्ता
भेदाभेदावभेदं भ्रममपि भगवन् कारणं कल्पयन्तः ॥ (42)

[व्या०] हे भगवन्—निर्दोषकल्याणगुणाकर, पुरुषोत्तमेति संबुद्धिः । पूर्वं बाह्यसंसरणेन वाक्यमुक्तम् । अत्र भगवत्संबोधनेन वाक्यमुच्यते । "अवलोक्य मुखं तेषामादित्यमवलोकयेत्" इति स्मृत्यर्थोऽत्रानुष्ठितो भवति । "अच्युतभानुना" इत्युक्तमादित्यरंवमत्र भगवच्छब्दोक्तदोषप्रतिभटत्वेन व्यज्यते । अत्र भकाराद्यर्थभर्तृत्वस्रष्टृत्वादिकमपि विवक्षितम् । चिदचितौ—चेतनान् प्रकृतिविकारांश्च । सृष्ट्वा—उत्पाद्य । विशसि—प्रविशसि । "तत्सृष्ट्वा" "तदेवानुप्राविशत्" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिश्रुत्यर्थोऽत्राभिप्रेतः । तेन—स्वसृष्टचेतनाचेतनानुप्रवेशेन । सच्च त्यच्चेति विश्वमुक्तोऽसि—'सच्च त्यच्चाभवत्' 'तत्तेज ऐक्षत' 'ता आपः' 'ततोऽसि सर्वः' इत्यादिना विश्वत्वेन बोधितोऽसि ; विश्वशरीरकत्वेन विश्ववाचकशब्दैरभिहितोऽसीत्यर्थः ॥

सच्च त्यच्चाभवदिति तत्तच्छब्दवाच्यमभवदित्यर्थ इत्युक्तम् । पित्रादिव[द]ननुप्रविष्टेन नामरूपव्याकरणसंभवादनुप्रवेशेन तनोर्व्याकरणं तयोः स्वपर्यन्तत्वसिद्ध्यर्थम् । तत्र नाम्नः स्वपर्यन्तत्वं—स्वमुख्यविशेष्यकबोधजनकत्वम् । रूपस्य तु स्वापृथक्सिद्धविशेषणत्वमित्येवं सामर्थ्यसिद्धोऽर्थः । कण्ठतोऽप्युक्तः—"तदनुप्रविश्य सच्च त्यच्चाभवत्" इति । तदिदमुक्तं—तेन चोक्तोऽसि विश्वम् इति । चस्त्वित्यर्थकः । तस्य

हृदयेऽन्वयः । "अंशो नाना" इत्यत्र चेतनाचेतनयोर्ब्रह्मशरीरतया तदपृथक्सिद्धविशेषणत्वं निर्णीतम् । "चराचरव्यपाश्रयः" इत्यत्र लोके चेतनाचेतनपर्यवसिततया गृहीतशब्दानां तत्प्रकारकब्रह्मपर्यन्तत्वं निर्णीतम् । अतो न लक्षणा शक्त्यन्तरं वेति ; तदत्रोक्तम् । 'सर्वं खलु' इति श्रुत्यर्थ उच्यते—त्वज्जत्वात् इत्यादिना ।

"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः" इत्यत्रायमर्थः—तज्जलानिदं सर्वं ब्रह्म खल्वित्यन्वयः । जायत इति जं, लीयत इति लम् । "अन्येभ्योऽपि दृश्यते" इत्युभयत्रापि डप्रत्ययः । अनित्यत्र तु 'अन प्राणन' इत्यस्माद्क्विप्प्रत्ययः । जलानिति च निम्नोन्नतादिवत्समासः । "यतो वा इमानि" इत्यादिश्रुत्यनुसाराद्विभक्तित्रयस्यापि विवक्षितत्वात् तस्य चैकत्रासंभवात् तस्य जलानिति शेषषष्ठ्या समासः । अननं च जीवनं, अत्रान्तःप्रवेशो विवक्षितः । "अन्तः प्रविष्टश्शास्ता" इत्युक्तेः । तज्जत्वात्तल्लत्वात्तदनत्वाच्च, इदं सर्वं ब्रह्म खलु, सर्वशरीरकं खलु ब्रह्म । यद्वा ब्रह्मशरीरं खलु सर्वमिति । तदिदमत्र भगवत्संबोधनेन उच्यते ॥

त्वज्जत्वात्—त्वत्त उत्पन्नत्वात् । त्वदिति व्यस्ता समस्ता वा पञ्चमी । त्वल्लत्वादिति— लीयत इति लि । लीयतेः कर्तरि क्विपि "ह्रस्वो नपुंसके" इति ह्रस्वः । लि इति ह्रस्वान्तम् । अनितीत्यनं, पचादेराकृतिगणत्वादच् प्रत्ययः । लि च अनं चेति खञ्जकुब्जादिवत्समासः । त्वल्लयनमिति शेषषष्ठ्या समासः । त्वत्संनिधिलयवत्वात्त्वत्संबन्ध्यननवत्वाच्चेत्यर्थः । संबन्धश्चेह क्रमेण अधिकरणत्वं हेतुत्वं च । त्वमितीति । निखिलं त्वमिति—निखिलशरीरकस्त्वमिति, निखिलं त्वच्छरीरमिति च, सर्वं त्वच्छरीरमिति वा । चशब्दो वाशब्दार्थः । किलशब्दः—श्रुतिस्थखलुशब्दव्याख्यानम् । सर्वं ब्रह्म खलु । अस्यां योजनायां सर्वशब्दः शरीरिपर्यन्तः । अत्र च तज्जलानिति जन्मलयान्वितस्तच्छब्दार्थः सूक्ष्मचिदचिद्विशिष्टं ब्रह्म । अननान्वितस्तु ब्रह्मत्वगुणयोगि ब्रह्मेति विवेकः । सर्वं ब्रह्म खलु सर्वं जगद्ब्रह्मापृथक्सिद्धं खलु । अस्यां योजनायां, सर्वशब्दो निष्कर्षकशब्दो जगन्मात्रवाची । ब्रह्मशब्दश्च ब्रह्मशरीरे लाक्षणिकः । तदिदं योजनाद्वयं 'त्वमिति च निखिलं त्वच्छरीरं किल' इत्युक्तम् । इतिशब्दद्वयार्थश्चाभेदव्यवहृति हृदये अभेदेनान्वेति । एवंभूतं वेदान्तेषु जीवब्रह्मणोरचिद्ब्रह्मणोश्चाभेदनिर्देशतात्पर्यं, विस्तृणानैः—विस्तरेण प्रतिपादयद्भिः । तैस्तैश्शास्त्रैः—"यस्यात्मा शरीरं" (मिति) "यस्य पृथिवी शरीरं" इत्यादिघटकश्रुतिरूपैः, "तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादिभिः, सर्वशरीरकतया सर्वशब्दवाच्यं ब्रह्मेति प्रतिपादयद्भिश्च

नित्यनिर्दोषापौरुषेयवेदान्तात्मकहितानुशासनशास्त्रैः कर्तृभिः निरस्ता इत्यत्रान्वयः। भेदाभेदौ—जगद्ब्रह्मणोर्भेदाभेदौ। अभेदं—जगद्ब्रह्मणोरभेदम् [भ्रमं] ब्रह्मणश्च स्वगतनानात्वभ्रमम् अतदाकारारोपं च। कारणम्—अभेदनिर्देशहेतुम्। अपिशब्देन जगद्ब्रह्मणोः प्रकारप्रकारिभावं विना केवलभेदं अभेदश्रुतेश्च राजा राष्ट्रमितिवत् स्वस्वामिभावं च हेतुम् [कल्पयन्तः] वदन्तो विवक्षिताः। निरस्ताः—श्रुत्यैव प्रत्याख्याता इत्यर्थः॥

अत्र भेदाभेदशब्देन औपाधिकस्वाभाविकभेदाभेदवादिनौ भास्करयादवौ विवक्षितौ। अभेदं भ्रममिति शंकरो विवक्षितः। अपिशब्देन वैशेषिकादयो विवक्षिताः। औपाधिकभेदाभेदपक्षे क्लेशकर्माद्यस्पृष्टस्येश्वरस्य तदर्हानीश्वरतादात्म्यं व्याहतम्। अभेदवद्भेदस्यापि सत्त्वात् खण्डमुण्डयोरिव न सामानाधिकरण्यमिति दूषणम्। स्वाभाविकभेदाभेदवादे गुणवत् दोषाश्च स्वाभाविका भवेयुः। भोग्यभोक्तृनियन्तॄणां त्रयाणामपि ब्रह्मांशत्वाभ्युपगमात् अचिज्जीवयोः अचिदीश्वरयोः जीवेश्वरयोश्च सामानाधिकरण्यं घटश्शराव इतिवदनुपपन्नमिति दूषणम्। शंकरपक्षे स्वयंप्रकाशब्रह्मणो दोषसंबन्धस्तन्मूलभ्रमश्च न संभवतः। सामानाधिकरण्यं च व्यर्थम्। एकेन पदेन स्वरूपस्यावगतत्वात्। विरुद्धं च—पदद्वयावगतधर्मद्वयवत्ताप्रतिपादनपरत्वात्तस्य। बाधार्थत्वे च तस्य पदयोः स्वरूपलक्षणा नञर्थलक्षणा चेति दूषणम्। किं च भ्रममित्यनेन सामानाधिकरण्यस्यातदाकारारोपणनिबन्धनत्वस्याप्युक्त्या वाक्याप्रामाण्यप्रसंगश्चेति दूषणम्। वैशेषिकादिपक्षे सामानाधिकरण्यस्यामुख्यत्वं स्पष्टम्। एतेषां चतुर्णां [पक्षाणां] (श्रुत्युक्त) श्रुतिगतसामानाधिकरण्यतात्पर्यविरुद्धतात्पर्यकल्पनं साधारणं दूषणम्। श्रुत्युक्तं चाभेदश्रुतितात्पर्यं दर्शितमेवेति॥ (42)

* * * * *

[मू०] [अथ प्रासङ्गिकमरुणाधिकरणम्]

[अव०] अरुणाधिकरणं व्याचिख्यासुस्तस्य परोक्तव्याख्यानप्रक्रियामनुवदति—[उन्नीतमिति]

[मू०] उन्नीतं गुरुणारुणाधिकरणे न ह्येकहायन्यगा-
दारुण्यान्वयमाभिधानिकमपि त्वाक्षेपतः प्रापितम्।

यद्ब्रूतेऽरुणयेति केवलगुणं वाग्द्रव्यनिर्देशव-
द्वाक्यस्थानगिरस्तु कारकविभक्त्यन्ता मिथः संगताः ॥ (43)

[ व्या० ] " अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् " इति पूर्वकाण्डसूत्रम् । अस्यैवमध्वरमीमांसकैर्व्याख्यानं कृतम्—आकृत्यधिकरणन्यायेन जातिगुणादि-विशिष्टपराणां शब्दानां विशेषणजात्यादिशक्तत्वं, तत्रोपात्तद्रव्यकवाक्यस्थनीलादि-शब्दानां गुणमात्रपरत्वम् । द्रव्यानुपादाने तु द्रव्यस्य लक्षणया बोधः 'यथा श्वेतमालभेत' इति ।

तत्रायं पूर्वः पक्षः—अरुणयेति पदमारुण्यशक्तम् । अस्यारुण्यस्य योग्यत्वेऽपि अव्युत्पन्नत्वान्न द्रव्येऽन्वयः । कारकाणां क्रिययैवान्वयात् । व्युत्पन्नत्वेऽपि अमूर्तस्यायो-ग्यत्वान्न क्रियायामन्वयः । अतो विच्छिन्नस्यास्य [श्रुतानुमितैकदेशकतया निष्पन्नेन ' अरुणया प्रकृतापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेत् ' इत्याकारकवाक्येनानियमेन प्राकरणिकसर्वद्रव्यान्वय इति] (प्रकरणकल्पितश्रुतानुमितैकदेशनिष्पन्नेन वाक्येनारुणया प्रकृतापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदित्याकारकेण प्राकरणिकसर्वद्रव्याङ्गत्वमिति ।)

सिद्धान्तस्तु—न योग्यताज्ञानं शाब्दबोधहेतुः । अपि तु अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम् । अतश्च प्रतिबन्धकाभावसत्त्वे आरुण्यस्यापि क्रियान्वयोपपत्तेः । पश्चात्तयोर्योग्यतागवेषणायाम् आरुण्यस्य पार्ष्ठिकद्रव्यसंबन्धबोधोपपत्तेः एकहायन्यन्वय-नियम इति । तमिमं सिद्धान्तमाह—उन्नीतमिति । यत्—यस्मात् । द्रव्यनिर्दे-शवद्वाक्यस्था—उपात्तैकहायनीद्रव्यकवाक्यस्थिता । अरुणयेति वाक्—अरुणयेति पदम् । केवलगुणं ब्रूते—लक्षणया द्रव्याप्रतिपादनेन शक्त्यारुण्यमात्रमभिधत्ते । कारकविभक्त्यन्ता गिरस्तु—कारकविभक्त्यन्तपदानि तु । मिथो न संगताः—क्रियानन्वयेनान्योन्यमन्वयानर्हाः । भवन्तीति शेषः । कारकाणां क्रियान्वयनियमात् । तस्मात्, एकहायनी, आभिधानिकम्—शाब्दम् । आरुण्यान्वयं, नागात्—नाभजत् । अपि त्वाक्षेपतः अमूर्तस्य क्रयसाधनत्वानुपपत्त्या अपरिच्छिन्नस्य तत्साधन-त्वानुपपत्त्या वानुमानेन " गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणि " इति न्यायेन पार्ष्ठिकमारुण्यान्वयमगादिति अत्र(ारुणयैकहायन्येतनयोः) युगपदन्वयाच्च गुणाव-रोधन्याय इति गुरुणा अरुणाधिकरणे उन्नीतम् उत्प्रेक्षितमित्यर्थः ॥ (43)

* * * *

[ अव० ] तदिदं दूषयन् वक्ष्यमाणं स्वाभिमतव्याख्यानं स्तौति— [ अरुणेत्यादि ]

[ मू० ] अरुणाधिकरणसरणिः
समगणि रामानुजार्यमुनिभिर्या ।
उचितेयमनुचितान्या
परिषदि विदुषां स्फुटीभवति ॥ (44)

[ व्या० ] रामानुजार्यमुनिभिः. या अरुणाधिकरणसरणिः तदधिकरणंपूर्वपक्ष-सिद्धान्तप्रक्रिया । समगणि—चिन्तिता । इयमुचिता न्याय्या । अन्या पूर्वोक्ता । अनुचिता—न न्याय्या । विदुषां परिषदि—प्रामाणिकानां सदसि । स्फुटीभवति—क्रमेण उचितेत्यनुचितेति च व्यक्तीभविष्यति ।

अत्रानुचितेति वदतोऽयं भावः—उपात्तद्रव्यकवाक्यस्थगुणवाचकपदं गुणमात्रपरमिति वदतां वाक्यभेदेन पूर्वपक्षे [विच्छिन्नस्य] अरुणापदस्यारुण्यपरत्वं व्याहतम् । "गुणे शुक्लादयः पुंसि" इति गुणमात्रपरत्वे पुंलिङ्गत्वापत्तिश्च । अतः पूर्वपक्षोऽनुपपन्नः । सिद्धान्तोऽप्यनुपपन्नः । [स्वत एवायोग्यस्यायोग्यताननुसंधानेन शाब्दबोधोपपादनस्यायुक्तत्वात् । अरुणापदस्य आभिधानिकान्वयं विहाय आर्थिकान्वया-श्रयणस्यान्याय्यत्वात् । एकस्याः क्रियायाः करणद्वयसाकाङ्क्षत्वकल्पकचशब्दद्वन्द्वसमा-साद्यश्रवणे एकहायन्या आरुण्येन च क्रयः साध्यतया विधीयत इत्यस्यास्वरसत्वाच्च] (स्वत एवायोग्यस्यायोग्यताप्रतिसंधाने शाब्दानुत्पत्तेः ।) किं च 'दशभिः क्रीणाति' इति वाक्यप्राप्तक्रयानुवादेन युगपदनेककारकविधानं न संभवति । न च तस्य क्रयसमुच्चयपरत्वमिति वाच्यम् । विधायकत्वौचित्त्यात् । किं चारुण्यस्यापि करणत्वे दशभिरित्यनुवादविरोधः । तस्य द्रव्यमात्रपरत्वे स्वरसस्यम् । क्रयभेदस्याप्रमाणि-कत्वादेव विजातीयक्रमसाधनत्वेनारुण्यस्य एकहायन्यन्वयनियमोऽपि दुर्वचः । 'विष्णवे शिपिविष्टाय' इत्यादौ कारकविभक्त्यन्तस्यापि द्रव्यान्वयस्वीकारादत्रापि तदुचितमिति ॥ (44)

* * * *

[ अव० ] [ श्रीभाष्यकारीयमरुणाधिकरणसिद्धान्तमाह ] स्वाभिमतप्रक्रियामाह— [ उपात्तेऽपीत्यादि ]

[मू०] उपात्तेऽपि द्रव्ये विसदृशविभक्तिव्यपगमात्
प्रकृत्या वैशिष्ट्यं परिणमति खल्वाकृतिनयात् ।
विभक्तिस्त्वर्थैक्यं कथयति समानैव पदयो-
स्त्रिरूपा सा संख्यान्वयमिव दिशेत् कारकधियम् ॥ (45)

[व्या०] अयमर्थः—परमते 'श्वेतमालभेत' इत्यादिषु गुणवाचिपदस्य, गुणिपर्यन्तत्वमुक्तम् । 'पटस्य शुक्लः' इत्यादिषु तदपवादकत्वेन उपात्तद्रव्यकवाक्यस्थत्वमभ्युपेतम् । तस्याप्यपवादकत्वेन 'पटः शुक्लः' इत्यादिषु सामानाधिकरण्यमुक्तमिति प्रयोजकत्रयकल्पनम् । अस्मत्पक्षे तु—'श्वेतमालभेत' 'पटःशुक्लः' इत्यादिप्रयोगेषु अपृथक्सिद्धधर्मवाचित्वमेव गुणिपर्यन्तत्वे प्रयोजकम् । 'पटस्य शुक्ल' इत्यादिषु असमानविभक्तिनिर्देशस्तदपवाद इति प्रयोजकद्वयमिति लाघवम् । तथा चास्मन्मते पूर्वपक्षे सिद्धान्ते चारुणापदस्य द्रव्यपर्यन्तत्वम् ॥

तदिहायं पूर्वः पक्षः—अरुणापदं द्रव्यपर्यन्तमेव ; आकृत्यधिकरणनयात् । अथापि अरुणयेत्यस्य एकहायन्यन्वयो न संभवति । स हि साक्षाद्वा क्रयान्वयद्वारा वा वक्तव्यः । तत्र न साक्षादन्वयः । कारकविभक्तित्वविरोधात् ; कारकाणां क्रियान्वयनियमात् । नापि क्रयान्वयद्वारा ; प्राप्तक्रयानुवादेनारुणाद्रव्यैकहायनीद्रव्य गोरुभयोर्विधाने वाक्यभेदापत्तेः । चशब्दाद्यभावेन "यदग्नये च प्रजापतये च" इत्यत्रेव समुदायविधानशङ्काया अप्ययोगात् , अरुणयेत्यत्र द्रव्यविशेषाप्रतीत्या विशेषरूपे गोपस्थितैकहायनीद्रव्यस्य झटिति क्रयान्वयेन गुणावरोधन्यायेन एकहायन्यवरुद्धे आरुण्यानन्वयात् । नाप्येकहायन्या क्रीणाति तया चारुणया भवितव्यमिति वाक्यार्थः संभवति । क्रये एकहायन्या एकहायन्यामारुण्यस्य च विधाने वाक्यभेदापत्तेः । अत आरुण्यस्य प्राकरणिकसर्वद्रव्यान्वयान्नैकहायन्यन्वयनियम इति ॥

सिद्धान्तस्तु—आरुण्यस्य एकहायन्यामेवान्वयः । समानविभक्तेः पदद्वयार्थैक्यपरत्वात् । न च कारकविभक्तिविरोधः । क्रियान्वयिकारकबोधकत्वसाक्षतेः । न च क्रिययैवान्वयनियमः । विभक्त्यर्थैकत्वस्य कारकान्वयाभावप्रसंगात् । न चैकवचनत्वेन एकत्वबोधकत्वाच्च कारकविभक्तित्वेन तद्बोधकत्वमिति वाच्यम् । समानविभक्तित्वेनैक्यबोधकत्वेऽपि विरोधाभावात् । तदिहारुण्यादिविशिष्टत्वं प्रातिपदिकावसेयम् । पदद्वय-

प्रवृत्तिनिमित्तभूतधर्मद्वयाश्रयवस्त्वैक्यं समानविभक्तिवाच्यम् । क्रियाकारकसंबन्धस्तु वाक्यावसेय इति न वाक्यभेद इति ॥

तमिमं सिद्धान्तमाह—उपात्तेऽपीत्यादिना । [ अरुणयैकहायन्येत्यादि वाक्ये इत्यादिः ] द्रव्ये—एकहायनीद्रव्ये । उपात्तेऽपि—निर्दिष्टेऽपि । अपि-शब्देन परोक्तपूर्वपक्षे द्रव्यनिर्देशवद्वाक्यस्थत्वमेव नास्तीति, तत्सिद्धान्ते च यद्यपि तदस्ति, तथापि तस्य गुणमात्रवाचकताप्रयोजकत्वं 'पटःशुक्ल.' इत्यत्र तदभावादिति च सूच्यते । विसदृशविभक्तिव्यपगमात्—असमानविभक्तिनिर्देशविरहात् । अपृथक्सिद्धगुणवाचित्वरूपोत्सर्गस्यापवादाभावादित्यर्थः । प्रकृत्या-समानविभक्तिप्रकृति-भूतारुणापदादिना आकृतिनयात्—आकृत्यधिकरणन्यायात् । वैशिष्ट्यम्—गुणयुक्त-त्वम् । परिणमति खलु—शाब्दबोधविषयीभवति । पदयोः—अरुणयैकहायन्येति पदयोः । समाना विभक्तिः, पदयोरर्थैक्यं—तदीयशक्तिग्रहजन्योपस्थितिविशेष्यैक्यम् । कथयत्येव प्रतिपादयत्येव । अयमेवाधिकरणार्थ इत्येवकारेण बोध्यते । तुशब्दश्च आकृत्यधिकरणात् प्रयोजनभेदद्योतनार्थः । त्रिरूपा—कारकविभक्तित्व-एकवचनत्व-समानविभक्तित्वरूपाकारत्रययुक्ता । सा—विभक्तिः । संख्यान्वयमिव—एकत्वादि-प्रकारकबोधमिव । कारकधियं—करणादिविषयकबोधम् । दिशेत्—दद्यात् । इदमुपलक्षणं पदद्वयार्थैक्यं दिशेदित्यपि द्रष्टव्यम् । त्रिरूपेत्युक्तेः । यद्वा सङ्ख्यान्वय इव दिशेदिति पाठः । सङ्ख्यान्वय इति—सप्तम्यन्तम् । एकत्वादिबोधकतायामि-वार्थैक्यबोधकतायामपि कारकबोधो नानुपपन्न इत्यर्थः । दिशेदिति शकि लिङ् । तथा च एकस्या अपि शक्ततावच्छेदकभेदाच्छक्तित्रयं संभवतीति भावः ॥

उचितेयमिति पूर्वश्लोक उक्तम् । तस्यायमाशयः—अरुणापदस्य गुणविशिष्टवाचि-त्वादेव न "गुणे शुक्लादयः पुंसि" इत्यनुशासनविरोधः । अत एव "गुणवचनाना-माश्रयतो लिङ्गवचनानि" इत्यनुशासनमपि स्वरसम् । अमूर्तस्य क्रयान्वयानभ्युपगमादेव नायोग्यतानिश्चयविरहदशाप्रतीक्षणमपि । समानविभक्त्यैक्यबोधकेनैकहानीद्रव्यमेव क्रयो-द्देशेन विधीयत इति न वाक्यभेददोषोऽपि । अत एव 'दशभिरि' ति न दशद्रव्यानुवाद-विरोधः । अत एव च विजातीयक्रयसाधनत्वेनार्थिकैकहायन्यन्वयाश्रयणक्लेशोऽपि न । गुणात् क्रयभेदश्चाप्रामाणिकः । 'दशभिः क्रीणाति' इत्यस्य च क्रयांशे विधायकत्वं स्वरसम् । दशभिरिति च तत्तद्वाक्यप्राप्तदशत्वानुवादः क्रयद्रव्यसमुच्चयार्थः । समान-

विभक्तिः पदद्वयार्थैकत्वबोधिनीति न गुणावरोधन्यायविरोधः । 'विष्णवे शिपिविष्टाय' इत्यादौ अनेनैवारुणाधिकरणन्यायेन कारकविभक्त्यन्तयोर्मिथोऽन्वयान्न वैरूप्यम् ॥

सङ्ख्यामुष्ट्यधिकरणे च---परिमाणविशिष्टवाचकपदसमभिव्याहृतसङ्ख्याविशिष्ट-वाचकपदार्थसङ्ख्याविशिष्टस्य पदार्थैकदेशेऽपि परिमाण एवाभेदान्वयो न परिमिते, व्युत्पत्ति-वैचित्र्यात् । अन्यथा 'द्वे प्रस्थे व्रीहयः' इति व्रीहीणां भूयस्त्वेन बाधापत्तेः । तथा च 'चतुरो मुष्टीन्' इत्यत्र परिमितद्रव्यविशेषणस्यापि मुष्टिपरिमाणस्य चतुष्ट्वं प्रति विशेष्यस्य बाधापेक्षया विशेषणस्य चतुष्ट्वस्यैव बाधो न्याय्य इति पूर्वपक्षे; सङ्ख्याविशिष्टस्यापि परिमितद्रव्य एवान्वयः । अन्यथा एकदेशान्वयापत्तेः । न च बाधो ; मुष्टिपरिमितत्वावच्छेदेनान्वयात् । स्वतोऽसङ्ख्यातानां तण्डुलानां देशाद्युपाधिनैव सङ्ख्येयतायाः संभवात् । मुष्टिपरिमितत्वस्य चोपाधित्वसंभवात् तदवच्छेदेनैव चतुष्ट्वस्यान्वयोपपत्तेः । "महाशूरः" इत्यदौ महत्त्वस्य शूरत्वद्वारेव मुष्टिपरिमाणद्वारा वान्वयः । तथा च परिमेयद्रव्यविशेषणत्वं चतुष्ट्वस्योपपन्नम् । अतश्चतुष्ट्वस्य मुष्टिपरिमाणस्य च उभयोरेव द्रव्यविशेषणत्वेऽपि प्रथमश्रुतचतुष्ट्वाबाध-नेनानन्तरश्रुतमुष्टिपरिमाणस्यैव बाध इति सङ्ख्यामुष्ट्यधिकरणविरोधोऽपि नास्ति । अत इयमुचिता अन्या त्वनुचितेत्युक्तम् ॥

किं च क्रयसमुच्चयं वदताम् "क्रयणेषु तु विकल्पः स्यादेकार्थत्वात्" इति द्वादशाधिकरणविरोधः । तत्र द्रव्यसमुच्चयस्यैव प्रतीतेः । न च क्रयणानि क्रया इति वक्तुं युक्तम् । तथा सति क्रयेष्वित्येव न्यासापत्तेः । "करणाधिकरणयोश्च" इति क्रयणशब्दस्य करणल्युडन्तत्वस्वारस्यात् । अत एव "इयं गौः सोमक्रयणी" इति मन्त्रवर्णानुरूप्यमिति । अत एव तदधिकरणभाष्येऽपि द्रव्यसमुच्चय एवाधिकरण-सिद्धान्ततयोक्तः । न च निर्गुणक्रयमात्रविधायकवाक्यान्तराभावेन तत्तद्वाक्यानामेव क्रयविधायकत्वावश्यंभावेन उत्पत्तिशिष्टतत्तद्वाक्यस्थगुणावरोधेन गुणान्तरानिवेशात् गुणात् क्रयभेदावश्यंभावेन एकार्थत्वस्य क्रयेष्वेव पर्यवसानमिति वाच्यम् । "तं वै दशभिः क्रीणाति" इति वाक्यस्य क्रयोत्पादकत्वोपपत्तेः । न च वैशब्देन विधित्वभङ्गः । "विधिस्तु धारणेऽपूर्वत्वात्" इत्यधिकरणोक्तन्यायेनार्थप्राप्तिवशादेव विधित्वसिद्धेः । "गवा क्रीणाति" इत्यादिष्वपि हि लिङाद्यश्रवणेनार्थप्राप्तिवशादेव विधित्वस्य वक्तव्यत्वात् । क्रयाणामपि भेदे गौरवाच्च । दशभिरित्यंशस्त्वनुवादः । स च समुच्चयार्थ इत्युक्तमेव ॥

किं चारुणादिवाक्यानां विभिन्नक्रयविधायकत्वेऽपि अन्योद्देशेन गुणविशिष्टधात्वर्थ-करणकभावनाविधानरूपषष्ठप्रकारापत्तिः । मम तु धात्वर्थोद्देशेनान्यकरणकभावना विधि-

रूपतृतीयप्रकारः । 'दशः क्रीणाति' इत्यन्योद्देशेनमि शुद्धधात्वर्थकरणकभावनाविधानाद् द्वितीयप्रकारश्चेति । न च वाक्यान्तरप्राप्तक्रयानुवादेनारुणादिवाक्येन द्रव्यविधाने निरपेक्षत्वबोधकतृतीयानुपपत्त्या दध्यादीनामिव गवादीनां विकल्पप्रसङ्ग इति वाच्यम् । तत्तद्द्रव्यजन्य(विक्रेत्रानतीनां) मिथो विलक्षणतया द्वारभेदादेव निरपेक्षत्वस्याक्षतेर्विकल्पानापत्तेः । अत एव परमतेऽप्यारुण्यगुणैकहायनीद्रव्ययोर्युगपद्विधानेऽपि द्रव्यपरिच्छेदादिलक्षणद्वारभेदेन द्रव्यगुणयोः परस्परनैरपेक्ष्यादुभयत्र तृतीयोपपत्तिरित्युक्तम् ॥

नन्वेवम् "तं वै दशभिः क्रीणाति" इति वाक्येन दशद्रव्यविशिष्टक्रयो विधीयते । सङ्ख्यायाः कर्मसामानाधिकरण्यविरहाच्च संख्यया कर्मभेदः । 'दशभिरि'-त्यंशेऽपि विधित्वान्न वैरूप्यमपि । कानि तानि दश द्रव्याणीत्यपेक्षायां गवादिवाक्यैर्द्रव्यविशेषविधिर्भवत्विति चेन्न । अज्ञातज्ञापनाप्रवृत्तप्रवर्तनरूपप्रमेयद्वयवतो विधेरिहाज्ञातज्ञापनमात्रार्थकत्वेन प्रवृत्तिविशेषकरत्वानापत्तेः । यद्यपि 'दशभिः क्रीणाति' इति द्रव्यविशिष्टक्रयोत्पत्ति[वाक्यं,] गवादिवाक्यं च गवादीनां पाक्षिक्यामप्राप्तौ प्रापकम्, अत एव 'सर्वे द्रव्यविधयो नियमविधय' इत्येतदत्र संगच्छत इति वक्तुं शक्यते ; तथापि द्रव्यविशेषमात्राविधानेन नियमसिद्धेर्न द्रव्यसामान्यविध्यपेक्षा अन्योद्देशेन शुद्धधात्वर्थकरणकभावनाविधानाद्द्वितीयविधिप्रकारसंभवेऽन्योद्देशेन गुणविशिष्टधात्वर्थकरणकभावनाविधानरूपषष्ठविधिप्रकाराश्रयणं च न न्याय्यम् । अतो 'दशभिरि'ति सङ्ख्याद्वारा द्रव्यसमुच्चयानुवादः । क्रीणातिपदेन चान्योद्देशेन शुद्धधात्वर्थकरणकभावनाविधिरूपद्वितीयप्रकार इति युक्तम् ॥

इदं तु चिन्तनीयम् । "दशभिः क्रीणाति" इत्यस्य विधायकत्वाश्रयणे, "आधाने सर्वशेषत्वात्" इति द्वैतीयीकाधिकरणसिद्धान्तविरोधः । तत्र ह्याधानस्य "य एवं विद्वानग्निमाधत्ते" इत्यनेनाग्न्युद्देशेनाधानविधायिना प्राप्तत्वात्, "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादीनि वाक्यानि ब्राह्मणकर्तृत्वे निमित्ते वसन्तादिकालस्याधानाङ्गत्वेन विधायकानीति पूर्वपक्षे "य एवं विद्वान्" इति वाक्यस्य वर्तमानापदेशरूपत्वेन विधायकत्वानुपपत्तेः, प्रत्यक्षविधियुक्तवसन्तादिवाक्यानामेव विधायकत्वेन ब्राह्मणकर्तृत्वादेर्निमित्तत्वाभावाद्गुणविशिष्टाधानस्य ब्राह्मणादीनां विधानमिति सिद्धान्तितम् । उक्तरीत्या यच्छब्दाद्युपबन्धवतो विधायकत्वे तद्विरोधः ॥

किं चैवं "द्रव्यं चोत्पत्तिसंयोगात्" इति पूर्वाधिकरणसिद्धान्तविरोधः । तत्र हि "स्फ्यश्च कपालानि च" इत्यनुक्रम्य "एतानि वै दश यज्ञायुधानि" इति वाक्यस्य

यज्ञायुधशब्दस्य यज्ञसाधनवाचितया स्फ्यादीनां यज्ञसाधनत्वावगमकत्वात्तस्य च साक्षादसंभवादविशेषेण सर्वाङ्गावतारात् योग्यसर्वक्रियासाधनत्वं स्फ्यादीनां "स्फ्येनोद्धन्ति" इत्यादीनि अवयुत्यानुवाद इति पूर्वपक्षे ; बहूनामुद्धननादिवाक्यानाम् आनर्थक्यापत्तेर्नित्यप्राप्त्यभावेन नित्यवच्छ्रवणविरोधापत्तेः "एतानि" इति वाक्ये वैशब्दोपबन्धाच्च उद्धननादिवाक्यं विधायकम् ; "यज्ञायुधानि" इति वाक्यं त्वनुवादकमिति सिद्धान्तितम् । तद्वदत्र वैशब्दयुक्तस्य विधायकत्वाद्बह्वीनां क्रीणातीनां वैयर्थ्यापत्तेश्च दशभिरिति वाक्यं न विधायकमिति ॥

अत्रोच्यते—'दशभिः क्रीणाति' इति वाक्यं सोमोद्देशेन क्रयविधायकम् । 'दशभिः' इति तु वाक्यान्तर(वा)प्राप्तदशद्रव्यानुवादः । न च पूर्वोक्ताधिकरणद्वयविरोधः । भूयो वैषम्यात् । तथा हि आधानाधिकरणे, "य एवं विद्वान्" इति वाक्यं तावत् "अथ संभारान् संहरन्ति" इति संभारविधिशेषं न विधायकं भवितुमर्हति । नैवं दशभिरित्यादिवाक्यं विध्यन्तरशेषतया श्रुतमितीदमेकं वैषम्यम् । वसन्तादिवाक्ये विधिश्रवणम् । नैवं गवादिवाक्ये विधिश्रवणमितीदमपरम् । प्रमाणान्तरप्राप्ताधानानुवादेन ब्राह्मणादिकर्तृकत्वे निमित्ते वसन्तादिकालविधाने कालस्यानुपादेयत्वात्प्राप्तेऽपि कर्मण्युपादेयत्वं काले तु विधेयत्वमिति वैयधिकरण्यापत्तिः वसन्तादिवाक्ये । गवादिवाक्ये तु नैव विधेयत्वोपादेयत्वयोर्वैयधिकरण्यं, गवादेरुपादेयत्वादित्यन्यदपि वैषम्यम् । वसन्तादिवाक्ये सर्वकर्तृकत्ववत् सर्वकालस्यप्याधाने प्राप्तिसंभवेन ब्राह्मणकर्तृकत्वे कालविधिः काले निमित्ते कर्तृविधिरित्यत्र विनिगमनाविरहादुभयविशिष्टाधानविधिरावश्यकः । गवादिवाक्ये तु नैवं विनिगमनाविरह इति इतरदपि वैषम्यम् । एवं "एतानि वै दश यज्ञायुधानि" इति वाक्यं "यज्ञायुधानि संभरन्ति" इत्येतद्विधिशेषं न विधिर्भवति । आख्यातं च नास्मिन् वाक्येऽस्ति । वैशब्दश्चात्र श्रूयते । स्फ्यादिवाक्यस्यानुवादकत्वे बहूनां वाक्यानां वैयर्थ्यमुद्धननादेर्नित्यप्राप्त्यभावान्नित्यवच्छ्रवणविरोध इति उद्धननादिवाक्यानां विधायकत्वम् । प्रकृते तु दशभिरिति वाक्ये क्रीणातीत्याख्यातं श्रूयते । अस्य च विधायकत्वाभावे वाक्यवैयर्थ्यम् । विधायकत्वेऽप्यस्य न गवादिवाक्यानां विधायकत्वहानिः । क्रीणातीनां बहूनामनुवादकत्वं तु, 'दशभिः क्रीणाति' इति वाक्यस्यानुवादकत्वाश्रयणाद्दूरम् । पदाद्वाक्यस्य प्रधानत्वात् । अत एवागत्या वसन्तादिवाक्ये षष्ठविधिप्रकाराश्रयणम् । प्रकृते तु गतिसत्त्वान्न तद्युक्तमिति ॥

अत्र च "तं वै दशभिः क्रीणाति" इति वाक्यविहितक्रयानुवादेन गवादिवाक्यविहितद्रव्याणां कथं तस्मिन्नेव वाक्ये दशभिरिति अनुवाद इति तु न शङ्कनीयम्। "वायव्यं श्वेतमालभेत" इति वाक्यविहितवायव्ययागानुवादेनालम्भस्य चोदकप्राप्तस्य वायव्यवाक्य एवानुवाद इति सिद्धान्तात्। अत एव द्वैतीयीकाधानाधिकरणपूर्वपक्षे तान्त्रिकैरुक्तम्। "संभारेष्वग्निमादधाति" इत्याधानप्रापको विधिः। अत्र हि न संभारा विधेयाः, प्रमाणान्तरप्राप्तत्वात्। नापि तदधिकरणकत्वम्। तस्मिन्नाधीयतामिति मन्त्रवर्णादेव प्राप्तत्वात्। अत आधानमात्रविधिरयमिति। एवं च "संभारेष्वग्निमादधाति" इति वाक्योत्पन्नाधानानुवादेन संभारवाक्यमन्त्रवर्णाभ्यां प्रापितयोः संभारतदधिकरणकत्वयोस्तस्मिन्नेव वाक्ये संभारेष्वित्यनुवादाभ्युपगमात्। इयांस्तु विशेषः—परमते गवादिवाक्यानां तत्तद्गुणविशिष्टविभिन्नक्रयविधायकत्वाभ्युपगमात् गवादिशब्दानां मत्वर्थे लक्षणावश्यंभावेन तदुत्तरतृतीयया क्रयगतकरणत्वस्यैव बोध्यत्वापत्तिः; मत्वर्थलक्षणायामपि क्रियाकारकसंबन्धापरित्यागोपपादनक्लेशश्च। अस्मन्मते तु, "तं वै दशभिः" इत्यादिवाक्यप्राप्तक्रयानुवादेन गुणविधानाभ्युपममान्न दोषद्वयमिति॥

ननु एवमेकहायन्या क्रीणाति, तयारुणया भवितव्यमित्याश्रयणे वाक्यभेदापत्तिरिति सिद्धान्त्यभिप्रायोन्नयनपूर्वकं तद्दूषितवता पूर्वपक्षिणा कथमारुण्यस्य प्राकरणिकसर्वद्रव्यनिवेशः स्वीक्रियते। पक्षद्वयेऽपि वाक्यभेदस्य तुल्यत्वादिति चेन्न। क्रये एकहायन्याः तस्यां चारुण्यस्य विधानमिति सिद्धान्तिनो विध्यावृत्तिलक्षणवाक्यभेदः। मम तु वाक्यभङ्गलक्षणवाक्यभेदः। वाक्यभङ्गाच्च प्रधानभूतविध्यावृत्तिः प्रधानदोष इति पूर्वपक्ष्याशयात्। 'अरुणया पिङ्गाक्ष्या' इति च समानविभक्त्या श्रौत एवारुण्यैकहायन्योः संबन्धः। क्रयान्वयस्तु एकहायनीद्रव्यस्य वाक्यावसेय इति न विध्यावृत्तिलक्षणवाक्यभेद इति सिद्धान्तिनो वास्तवाशयेन वाक्यभङ्गलक्षणवाक्यभेदपूर्वपक्षोपर्युक्तविधया सिद्धान्तकरणोपपत्तेः॥

नन्वेवमप्यरुणयेति तृतीयाया विशेषणविभक्तित्वेन साधुत्वमात्रार्थत्वापत्तिरभेदस्य संसर्गत्वादिति चेन्न। समानविभक्तेरभेदार्थकत्वोपगमात्। अन्यथा अनुमितिप्रतिबन्धकतायां कल्पनागौरवापत्तेः। न च तथापि विशेष्यविभक्त्यैव करणत्वस्य बोधितत्वाद्विशेषणविभक्तेः कारकबोधकत्वविरह इति वाच्यम्। "संबन्धेनान्यतरवैयर्थ्यम्" इति न्यायेन उभाभ्यामप्येकस्यैव करणत्वस्य बोधनात्। 'नीलेन जलमाहरति' इत्यादौ

नीलादिपदोत्तरविभक्तेः करणताबोधकत्वमावश्यकम् । 'घटेन जलमाहरति' इत्यादौ च घटादिपदोत्तरविभक्तेस्तदावश्यकम् । 'नीलेन घटेन जलमाहरति' इत्यादौ उभाभ्यामेव विभक्तिभ्यामेकं करणत्वं बोध्यते । प्रत्येकमवधृतसामर्थ्ययोरन्यतरस्याकरणत्वे मानाभावात् । न च तथाप्यनन्याभिहितकरणतानभिधायकत्वाद्विभक्तेः किंचिदस्वारस्यमिति वाच्यम् । अनन्यकरणकक्रियाकरणताभिधायित्व एव स्वारस्यधुराविश्रान्तेस्तदभावेन त्वन्मतेऽप्यस्वारस्यस्यावर्जनीयत्वात् । लिङ्गबाधनं त्वधिकं त्वन्मते । अरुणापदस्य गुणमात्रपरत्वे स्त्रीलिङ्गानुपपत्तेः । लिङ्गस्य विभक्त्यपेक्षया प्राथम्येन जघन्यविभक्त्यनुसारेण प्रक्रमस्थलिङ्गस्वारस्यबाधनानुपपत्तेः । अत एव "न प्रथमयज्ञे प्रवृञ्ज्यात्" इत्यत्र प्रथमश्रुतप्रथमशब्दस्वारस्यानुरोधेनानन्तरयज्ञपदस्य प्रयोगपरत्वं निर्णीतम् ॥

यत्त्वत्र कैश्चिदुक्तं—लिङ्गस्य प्रातिपदिकार्थत्वे प्राबल्यहेतोः प्रथमप्रतीतत्वस्याभावात् स्त्रीलिङ्गासाधारणेन अरुणयेति विभक्तिविकारेण टाप्प्रत्ययमुन्नीय स्वयंवाचकेन प्रातिपदिकार्थद्योतकेन वा लिङ्गस्य प्रत्येतव्यत्वादिति, तन्न । अरुणयेत्यत्र विभक्तेर्विकाराभावात्, प्रकृतेरेव हि विकारः । किं च रूपमालादिना काव्यपाठेन च व्युत्पत्तिदशायामेव "मधुरया मधुबोधितमाध्वी" इत्यादौ आकारान्तस्त्रीलिङ्गस्तृतीयैकवचनान्त इत्येवंरीत्या व्युत्पत्तेः । अन्यत्रापि प्रतिसन्धानाच्च लिङ्गस्यैव प्रथमप्रतीतेर्विभक्तिप्राथम्यासिद्धेः । अनुशासनविदां तु "ङ्याप्प्रातिपदिकात्" इत्यनुशासनेन स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमिकत्वेन बोध्यक्रमेण बोधकक्रम इति शैषिकक्रमन्यायेन वा लिङ्गप्राथम्यावगमेनान्यत्रापि प्रथमावगतक्रमानुपमर्देनैव प्रतिसन्धानाच्च विभक्तिप्राथम्यासिद्धेः । किं च स्वरूपेण विभक्तिविकारज्ञानं न टाबुन्नायकम् । विभक्तिविकारत्वेन तज्ज्ञानं त्वनुशासनाननुध्यायिनां दुर्लभम् । तदनुध्यायिनां तु पूर्वोक्तदिशा लिङ्गावगतिप्राथम्यमेवेति प्रथमयज्ञन्यायप्रवृत्तौ न किंचिद्बाधकम् ॥

किं चैवमरुणादिशब्दानां द्रव्यलाक्षणिकत्वे, "गुणवचनेभ्यो मतुपो लुगिष्टः" इत्यनुशासनानर्थक्यम् । निरूढलाक्षणिकत्वे च शक्यार्थमात्रविवक्षया प्रयोगानापत्तिः । नन्वेवं यत्रारुणा पिङ्गाक्षी मेषी लब्धा केवलमेकहायनी गौश्च लब्धा, तत्र, परमते कथं प्रत्यारुण्यस्यापि द्रव्यवत् करणत्वात् प्रथमश्रुतारुण्यानुरोधेन द्रव्यस्य त्यागः । भवन्मते तु आरुण्यस्य द्रव्यशेषत्वात् द्रव्यगुणविरोधे च द्रव्यस्य त्यागायोगात् द्रव्यानुरोधेन गुणस्यैव त्याग इत्यनुष्ठानभेदापत्तिः । न च तद्युक्तं—देवता-

विग्रहाद्यभ्युपगमेऽपि द्रव्यदेवतासाम्ये द्रव्यसाम्यस्यातिदेशहेतुत्वं द्रव्यस्य सन्निकृष्टत्वात्। न तु देवतासाम्यस्य । स्वरूपतो विप्रकृष्टत्वादित्यनुष्ठानैक्यपरित्राणादिति चेन्न । अरुणयैकहायन्येत्यत्र क्रयद्रव्यं प्रत्यरुणिमगुणो गोत्वजातिश्चेत्युभयमप्यङ्गम् । तत्रोभयोरेव द्रव्याङ्गत्वाविशेषेऽपि प्राथम्यादेवारुण्यानुरोधेनानन्तरश्रुतजातिबाध इत्यनुष्ठानभेदाभावात् ।

अत्र 'उचितेयमनुचितान्या' इत्युक्तम् । 'उन्नीतं गुरुणा' इति पूर्वोक्तपरामर्शसौकर्याय उचितेयमनुचिता सेति वक्तव्यम् तथाप्यन्येत्युक्तिः प्रकारान्तरेण परोक्तमरुणाधिकरणव्याख्यानमप्यनुचितमिति व्यञ्जनाय । तथा हि—केचिदमूर्तस्य क्रयान्वयानुपपत्त्यारुणापदस्य लक्षणया द्रव्यपरत्वावश्यंभावे पिङ्गाक्षित्वविशिष्टेवारुण्यविशिष्टाप्येकहायनी युगपदेव क्रयार्थतया विधीयत इति पूर्वपक्षं परमतवदेव गुणमात्रपरत्वेन सिद्धान्तं च आहुः ॥

अरुणापदस्य ऐकरूप्याभ्युपगमेनैव पूर्वपक्षसिद्धान्तयोः प्रवर्तनौचित्यादिदमपि अनुचितमिति बोधयितुमन्येत्युक्तम् इति ॥ (45)

[ अव० ] "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" "कर्ता शास्त्रार्थवत्त्वात्" "परात्तु तच्छ्रुतेः" "कृतप्रयत्नापेक्षस्तु" इत्याद्यधिकरणार्थमाह— [ आदावित्यादि ]

[ मू० ] आदावीश्वरदत्तयैव पुरुषस्स्वातन्त्र्यशक्त्या स्वयं
तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन् वर्तते ।
तत्रोपेक्ष्य ततोऽनुमत्य विदधत्तन्निग्रहानुग्रहौ
तत्तत्कर्मफलं प्रयच्छति ततः सर्वस्य पुंसो हरिः ॥ (46)

[ व्या० ] ब्रह्मकारणवादे परोक्तदूषणोद्धारोऽयम् । अस्यार्थः—आदौ—सृष्टौ । पुरुषः—जीवः । जात्येकत्वम् । सर्वस्य पुंस इति वक्ष्यमाणत्वात् । ईश्वरदत्तया—सर्वशेषिणा, सर्वनियन्त्रा, भगवता स्वकरुणयैवोत्पादितया । अनेन सृष्टियौगपद्यमनुग्रहनिबन्धनमिति सूचितम् । दत्तयेत्यनेनोक्तार्थलाभः । स्वातन्त्र्यशक्त्या—इच्छायां सत्यामनिवार्यत्वं स्वातन्त्र्यं, सैव शक्तिः—कार्योपयुक्तकारणगतधर्मः, तया । यद्यपि शक्तिः अद्रव्यप्रभेदः ; तथापि कार्योपयोग्यपृथक्सिद्धविशेषणमिह शक्तिरित्युपचर्यते । तत्तज्ज्ञानचिकीर्षणप्रयतनानि—तत्तत्पदार्थ-

विषयकज्ञानचिकीर्षाप्रयत्नानि । कर्तुमिच्छा—चिकीर्षा । प्रवृत्त्युद्योगः प्रयत्नः । उत्पादयन्—जनयन्, वर्तते । आभ्यां प्रथमप्रवृत्तिः द्वितीयादिप्रवृत्तयश्च विवक्षिताः । तत्र—प्रथमप्रवृत्तौ । उपेक्ष्य—अनिवारणमनुत्पादनं च कृत्वा । ततः—द्वितीयादिप्रवृत्तिषु । अनुमत्य—सहकारिभावं प्राप्य । तन्निग्रहानुग्रहौ—आद्यप्रवृत्तौ स्वतन्त्रस्य पुरुषस्य निग्रहं दुष्कर्मजन्यनरकादिप्रदानसंकल्पं, अनुग्रहं सत्कर्मजन्यस्वर्गादिप्रदानसंकल्पं च । विदधत्—कुर्वन् । तत्तत्कर्मफलं—संकल्पानुसारेण स्वर्गनरकादिरूपपुण्यापुण्यफलम् । सर्वस्य पुंसः—सर्वपुरुषाणाम् । प्रयच्छति—ददाति । क इत्यत्राह—हरिः—

" ब्रह्माणं शितिकण्ठं च यमं वरुणमेव च ।
प्रसह्य हरते यस्मात्तस्माद्धरिरितीर्यते ॥ "

इत्युक्तसर्वप्रशासिता भगवानित्यर्थः ।

ईश्वरदत्तया स्वातन्त्र्यशक्त्येत्यनेन,

" वैयर्थ्यं यावता न स्याद्विधानप्रतिषेधयोः ।
नियन्तृत्वश्रुतेस्तावान् संकोचो न त्वतः परम् ॥

बाह्यान्तःकरणव्याप्तितच्छक्त्याधानधारणैः ।
साधारणोपकारैः स्यादिच्छादेः कारणं परः ॥

भोगादृष्टोपनीतार्थस्वाभाव्याद्वासनान्वितात् ।
इच्छादेर्मनसोत्पत्तौ युक्तोदासीनता विभोः ॥

अभिसन्ध्यन्तरप्राप्तवस्तुन्यन्यत्र केनचित् ।
उपयुक्तव्युदास्ते हि तस्य प्रापयिता पुमान् ॥

सामर्थ्ये सत्यवार्यत्वात् स्वतन्त्रो जीव उच्यते ।
स ह्योदने विषज्ञानात् स्वेच्छामपि नियच्छति ॥

सन्निधापकवैधुर्येऽप्यर्थे बुद्धिं सतां नयन् ।
प्रयोजकोऽनुमन्ता च भवतीशस्तदा तदा ॥

पूर्वप्रवृत्तेश्च फलमनुमत्यादिकं भवेत् ।
दयादीनां गुणानां च सुलभं विषयान्तरम् ॥

अमात्यस्य स्वतन्त्रत्वे राज्ञस्तन्नापहीयते ।
एवमेव परस्यापि जीवस्वातन्त्र्यदायिनः ॥

न स्वातन्त्र्यं पराधीनस्वरूपात् प्रच्युतं भवेत् ।
स्वातन्त्र्यदायिना पुंसा तत्प्रवृत्त्यनिवारणात् ॥"

इति व्यासपादाभिहितसंग्रहार्थः सूचितः । अतो जीवानां स्वातन्त्र्यं विधिनिषेधशास्त्रसाफल्यं, परमात्मनः सर्वकारणत्वं निरङ्कुशस्वातन्त्र्यवत्त्वं च सर्वमुपपन्नम् ॥ (46)

* * * *

[अव०] तर्हि अनिवर्तनादिकं दोषः स्यादित्यत्राह—[दुष्कर्मस्वित्यादि]

[मू०] दुष्कर्मस्वनिवर्तनानुमनने पुंसः करोत्यच्युतः
स्वातन्त्र्येण निरङ्कुशेन स गुणः श्रुत्या न दोषो हरेः ।
दृष्टश्चारिषु निग्रहो गुणतया लोके न दोषात्मना
न स्यादाश्रयसिद्धिरौपनिषदं नो चेत् प्रमाणं वचः ॥ (47)

[व्या०] [अच्युतः—] प्रमाणतर्काभासावलम्बनैर्बाह्यकुदृष्टिभिरप्रच्यावनीयकारणत्वनियन्तृत्वादिमहिमा भगवान् । निरङ्कुशेन—अप्रतिहतेन पारतन्त्र्यासमानाधिकरणेन । स्वातन्त्र्येण—इच्छायां सत्यामनिवार्यत्वेन हेतुना । पुंसः—पूर्वोक्तरीत्या करणकळेबरवितरणादिरूपैः साधरणोपकारैरुपकृतस्य वासनावशाद्दुरितेषु प्रवर्तमानस्य पुरुषस्य । दुष्कर्मसु—पापेषु । अपादानस्याधिकरणत्वविवक्षया सप्तमी । अनिवर्तनानुमनने—आद्यप्रवृत्तावनिवारणं द्वितीयादिप्रवृत्तिष्वनुमतिं च । अत्र कर्मत्वाश्रयस्याधिकरणत्वविवक्षया सप्तमी, दुष्कर्मस्विति । करोति—तद्वान् भवति । सः—स्वातन्त्र्यम् । श्रुत्या—नित्यनिर्दोषापौरुषेयवेदेन । हरेः—हेयप्रतिभटस्य सर्वनियन्तुर्भगवतः । गुणः—उत्कर्षापादकधर्मः । गुणापेक्षया स इति पुंस्त्वम् । सः—स्वातन्त्र्यम् । दोषो न—अपकर्षापादकधर्मो न । श्रुत्येत्यनुषज्यते । धर्मिग्राहकश्रुत्यैव

स्वातन्त्र्यस्य गुणत्वं दोषत्वविरहश्च सिद्धमित्यर्थः । श्रुतेस्तर्कानुग्रहमाह—दृष्टश्चेति । चः किं चेत्यर्थकः । लोके अरिषु—स्वशासनातिवृत्तिविषये । निग्रहः—अपराधानुगुणदुःखप्रयोजकता । गुणतया दृष्टः । राज्ञामिति शेषः । दोषात्मना—दोषत्वेन आत्मस्वभावो न दृष्टः । राज्ञां स्वानभिमतेषु उत्तरोत्तरमपराधानुज्ञानमपि हि निग्रहरूपं दृष्टम् । एवं पापेष्वनुमननमपि प्राक्तनदुरितजन्यनिग्रहफलरूपमिति यथा कर्मफलदायित्वं स्वातन्त्र्यं गुण एव न तु दोष इति भावः । एवं स्वातन्त्र्यस्य गुणत्वे श्रुतिरनुकूलतर्कश्च उक्तौ । अत्रायं विकल्पोऽभिप्रेतः—किमीश्वरानभ्युपगमेन स्वातन्त्र्यं दोष इत्युच्यते ? उत तदभ्युपगमेनेति । तत्राद्यं दूषयति--आश्रयसिद्धिर्न स्यादिति । ईश्वरा(न)-भ्युपगमेन स्वातन्त्र्यं दोष इत्युच्यते—इत्याश्रयभावादनभ्युपगमकल्पो न कल्पत इत्यर्थः । द्वितीयं प्रतिक्षिपति--औपनिषदमिति । औपनिषदं—उपनिषद्भवम् । वचः वाक्यम् । प्रमाणं नो चेत्--त्वया अनभ्युपगतप्रामाण्यकं चेत् । आश्रयसिद्धिर्न स्यात्—स्वातन्त्र्यरूपधर्मस्याश्रयो न सिध्येत् ।

अव्यवधानेन ब्रह्मप्रतिपादकवेदभागविशेष उपनिषत् । उप निषीदतीत्युपनिषत् । गहने हीयमुपनिषण्णेत्युक्तम् । गहने ब्रह्मण्युपनिषण्णेति तद्व्याख्यानम् । उपनिषत्पदाद्भवाधिकारीयोऽण्प्रत्ययः । भवत्वं च घटकत्वम् । 'अत्र स्वातन्त्र्येण निरङ्कुशेन स गुणः श्रुत्या' इति 'न स्यादाश्रयसिद्धिरौपनिषदं नो चेत् प्रमाणं वचः' इति च [1]वदतोऽयमभिप्रायः । अनुमानेन स्वातन्त्र्यस्य दोषत्वं वदता त्वया किं श्रुतिः प्रमाणम् इत्यभ्युपगम्यते, न वा । आद्ये धर्मिग्राहकप्रमाणभूतश्रुत्यैव भगवत्स्वातन्त्र्यस्य गुणत्वं सिद्धमिति तस्य दोषत्वानुमानं कालात्ययापदिष्टं स्यात् । द्वितीये श्रुत्यैकसमधिगम्यस्येश्वरस्यासिद्ध्या स्वातन्त्र्यं कस्य दोष इत्युच्यत इति हेतोराश्रयासिद्धिः स्यादिति । इदं च विस्तरेण व्यासपादैरनुगृहीतम् । तथा च धर्मिग्राहकप्रमाणसिद्धगुणभावस्वातन्त्र्यप्रयुक्तत्वात् जन्मान्तरदु[2]ष्कृतफलप्रदानरूपत्वाच्च भगवतो जीवस्य दुष्कर्मस्वनिवर्तनमनुमतिश्च गुणो न तु दोष इति भावः (इत्यादि) ॥ (47)

* * * *

---

1. पा. यं भावः, 2. पा. कर्म,

[अव०] दयादिगुणानां विषयमाह—[दुष्कर्मेत्यादि]

[मू०] दुष्कर्मव्यवसायतस्तु विरतो यस्तस्य पुंसः पुरा
भूयोजन्मसमर्जितान्यगणितान्यागांस्यनादृत्य यत् ।
तस्यानन्तसुखाप्तये च यतते लक्ष्मीसहायस्स्वयं
तत्कारुण्यपुरस्सरो गुणगणस्तस्यायमुज्जृम्भते ॥ (48)

[व्या०] यः—पुरुषः । दुष्कर्मव्यवसायतः विरतः—त्रिविधापचारकर्तव्यतानिश्चयान्निवृत्तो भवति । तुशब्दैकवचनाभ्याम् अस्य दुर्लभत्वं श्रैष्ठ्यं चोच्यते । लक्ष्मीसहायः—"देव्या कारुण्यरूपया रक्षकः" इत्युक्तरीत्या कारुण्यादिगुणोद्भाविकया लक्ष्म्या युक्तः । अङ्गीकर्तृत्वमनुमन्तृत्वं च पत्न्याः तान्त्रिकैरुक्तम् । लक्ष्मीतन्त्रेऽपि—

"एकाहं परमा शक्तिस्तस्य देवी (सनासनी) [सनातनी] ।
करो (ति) [मि] निखिलं कृत्यं सर्वभावानुगामिनी ॥"

इति सर्वकृत्येषु भगवदनुविधानं स्वयमेवोक्तम् । मूलप्रकृतिभगवद्बुद्धिशक्त्याभिमानित्वादिना चास्याः कारणत्वादिव्यपदेश इति तत्रतत्रोक्तम् । एवंभूतो भगवान्, तस्य—अतिमात्रं प्रातिकूल्यव्यवसायनिवृत्तस्य, [पुंसः] पुरा—प्राचीनैर्भूयोभिः बहुतरैः जन्मभिः । समार्जितानि वाचिकादित्रैरूप्येण घनवदिच्छापूर्वकं संगृहीतानि । अगणितानि—सर्वज्ञेन भगवतापि इयत्तया दुर्ज्ञेयानि । आगांसि—अपराधान् । अनादृत्य—दण्डाप्रयोजकतया संकल्प्य । तस्य—पुरुषस्य । अनन्तसुखाप्तये—अपरिच्छिन्नब्रह्मानुभवतत्पूर्वकतत्परिचर्याजन्यनिरतिशयानन्दप्राप्तये । प्राप्तिं कर्तुम् । स्वयं च यतते—स्वयमेव प्रवर्तते । स्वयमिति लक्ष्म्या, एव[च]कारेण मुक्तस्य च व्यावृत्तिः । अनेन प्रयोजयितृत्वस्य विषयो दर्शितः । इति यत् [तत्] तस्मात्—लक्ष्मीपतेः कारुण्यपुरस्सरः कारुण्यप्रभृतिकः । अनेनाश्रयणीयतापादकेषु गुणेषु दयायाः प्राधान्यमुक्तम् । अत्र [1] हि दया (भिः) "स्वार्थनिरपेक्षापरदुःखासहिष्णुता" इति भाषितम् । अत्र च परदुःखानां

---

1 च

(असत्यता) [असह्यता] लब्धा । सा च प्रतिकूलतया वेदनीयत्वरूपैवेति परदुःख-दुःखित्वरूपा दयेत्युक्तं भवति । एतच्चात्र कारुण्यशब्दोपादानेन सूचितम् । "ऋषेः [1] पुण्यात्मनस्तस्य कारुण्यं समपद्यत" "शोकःश्लोकत्वमागतः" इति ह्युक्तम् । अयं प्रमाणसिद्धः ; स्वविषयतया स्वानुभवसिद्धिर्वा ग्रन्थकृतोऽभिप्रेता । गुणगणः—मोक्षप्रदत्वौपयिकवात्सल्यादिगुणप्रकरः । उज्जृम्भते—असंकुचितविषयलाभेन प्रकाशते । अनेन दयादीनां विषय उक्तः । तदिदं भाषितं भगवता "स्वशासनातिवृत्ति [निवृत्ति]-व्यवसाय्यमित्रेणानाद्यनन्तकल्पोपचितदुर्विषहानन्तापराधानङ्गीकारेण निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते" इति ॥ (48)

* * * *

## अथ मायावादिनिरासप्रकरणम् ।

[अव०] एवं ब्रह्मकारणवादे परोक्तदूषणानि परिहृतानि । अथ परमते दूषयितुमुपक्रमते—

[मू०] आदौ भेदश्रुतीनामनृतविषयता लक्षणा चैक्यवाचां
दूरेणैव प्रहाणं तदुभयघटनातत्पराणां च वाचाम् ।
प्रत्यक्षादिप्रमाणस्वरसगतिहतिस्तर्कबाधश्च भूया-
न्मायावादे तदेतत् सकलमितरथा लक्ष्मणाचार्यपक्षे ॥ (49)

[व्या०] एकस्य मायावादस्य दूषणेन बौद्धानां साङ्ख्यस्य यादवभास्करयोश्च पक्षाः प्रतिक्षिप्ता भवन्तीति स एवात्र प्रतिक्षिप्यते । वैशेषिकश्च संस्थानजातिनिरूपणप्रसङ्गेन पूर्वमेव निरस्तः । शैवपक्षस्तु "कस्त्वं तत्त्वविदसि"- इत्यादिना विस्तरेण दूषयिष्यते । अतः परपक्षप्रतिक्षेपवादार्थः सर्वोऽप्युक्तो भवति ॥

तथा हि—'लक्षणा चैक्यवाचाम्' इत्युक्तम् । तत्र शंकरपक्षे लक्षणा नास्ति । विशेष्यैक्यपरत्वाभ्युपगमात् । किं तु विशिष्टाभिधानस्वरसस्य शब्दस्य विशेषणाविषयकबोधजनकत्वमात्रम् । एवं चात्र लक्षणाशब्दस्यास्वारस्यपरत्वं वक्तव्यम् ।

---

1. धर्मात्मनः ।

लक्षणाशब्दमुख्यार्थस्यापि संभवे सोऽपि ग्राह्य एवेति, 'लक्षणा चैक्यवाचा'मित्येतद्यादव-भास्करसंग्राहकम्। तत्र यादवमते सन्मात्रब्रह्मपरिणामजीवेश्वरवाचिपदयोर्घटशरावपदयो-रिव सामानाधिकरण्यमनुपपन्नमित्यन्यतरस्य उपादानसन्मात्रब्रह्मलक्षकत्वमाश्रयणीयम्। भास्करपक्षेऽपि औपाधिकभेदाभेदाभ्युपगमात् जीवेश्वरवाचिपदयोर्घटाकाशपटाकाशपद-योरिव तदनुपपन्नमिति अन्यतरस्यानुपहितलक्षकत्वमावश्यकम्। (शंकरपक्षे च विशेषणांशप्रहाणादस्वारस्यम्।) अतो 'लक्षणा चैक्यवाचा'मित्यत्र यादवभास्करयोः संग्रहः।

(प्रत्यक्षात् न्यादिना) ['प्रत्यक्षादि' इत्यादिना] बौद्धानां दूषणं स्पष्टम्। पदार्थानां स्थित्युत्पत्त्योः सर्वलोकप्रत्यक्षसिद्धयोस्तैरपलापात्। दोषादीनां मिथ्यात्वेऽपि भ्रमाङ्गीकारश्च प्रत्यक्षविरुद्धः। चिन्मात्रस्य सत्यत्वम् अन्यस्यासत्यत्वं च शंकर-योगाचारयोरविशिष्टम्। साङ्ख्यशंकरयोश्च निर्विकारस्वप्रकाशैकरसचिन्मात्रस्य स्वव्यति-रिक्तसाक्षित्वमविशिष्टम्। अत एव "विप्रतिषेधाच्चासमञ्जसम्" इति सूत्रे भगवता भाष्यकृता शंकरपक्षे साङ्ख्यपक्षदूषणमतिदिष्टम्। तेषामप्युक्तरीत्या विद्या-साक्षित्वाध्यासाद्यसंभवादसामञ्जस्यमेवेत्यतः शंकरपक्षदूषणेन सर्वं दूषितं भवतीति स एवात्र स्पष्टं दूष्यते। तदुक्तम्—"सांख्यसौगतचार्वाकसंकराच्छाङ्करोदयः। दूषणान्यपि तान्यत्र भूयस्तदधिकानि च" ॥ इति ॥

**आदाविति**—मायावादे ब्रह्मभ्रमहेतुभूतानिर्वचनीयानुपपत्त्यैकवेषाविद्याङ्गीकार-पक्षे शंकरमत इत्यर्थः। **आदौ**—प्रथमम्। वक्ष्यमाणदोषापेक्षया प्राधान्यं सूचितम्। **भेदस्य श्रुतय** इति विग्रहः। तत्प्रतिपादकत्वं, तद्व्याप्यद्वित्वादिप्रतिपादकत्वं च षष्ठ्यर्थः। **तासां, अनृतविषयता**—मिथ्याभिधेयकता। 'शरदः कृतार्थता' इतिवत् पुंवद्भावः। इदं रजतमित्यादिवाक्यवत् असदर्थकत्वं प्रधानदोष इति भावः। तत्त्वावेदकत्वलक्षणं प्रामाण्यं हीयेतेति हृदयम्। अत्र भेदश्रुतिशब्देन नानाविधद्रव्यदेवता-देशकालेतिकर्तव्यताफलाधिकारिप्रायश्चित्ताद्युपस्कृतोच्चावचयागदानहोमाद्यात्मककर्मविधिपरः कृत्स्नोऽपि पूर्वभागः; उत्तरभागेऽपि—चेतनाचेतनतत्सृष्ट्यादितत्फलसुखदुःखतद्धेतुशब्द-स्पर्शादितदुभयनियन्तृ - ईश्वरगुणविग्रहतत्प्राप्त्युपायविद्याविशेषतत्फलगतिविशेषादितत्पूर्वक-परिपूर्णब्रह्मानुभवतत्पूर्वकतत्परिचर्यातदुपपादकदिव्यमहिषीपरिच्छदादिपरसहस्रभेदप्रतिपादक-सन्दर्भाश्च विवक्षिताः। **ऐक्यवाचाम्**—अभेदप्रतिपादकसामानाधिकरण्यनिर्देश-युक्ततत्त्वमस्यादिवाक्यानाम्। **लक्षणा**—विशेषणांशत्यागः। **चकारः** पदान्तर-

वैयर्थ्यसमुच्चयपरः । शक्तिग्रहानुसारेण प्रवृत्तिनिमित्तधर्मप्रकारकोपस्थितिः प्रथमभाविनी । अनन्तरं तदुक्तजातिगुणाद्यन्योन्यैक्यापत्त्यादिकुतर्कजनितक्षोभेण, विशेषणांशत्यागेन विशेष्यस्वरूपमात्रबोध इति, विलंबितत्वसाम्याद्विशेषणाविषयकविशेष्यमात्रविषयकज्ञान-जनकत्वेन लक्षणाशब्दप्रयोगः । प्रयोजनं तूक्तमेव ॥

**तदुभयेत्यादि**—**तासामुभयीनां**—भेदश्रुतीनामभेदश्रुतीनां च **घटनायां** भेदाभेदयोर्विषयभेदप्रदर्शनेन विरोधशमनपूर्वकं प्रामाण्योपपादने, [ **तत्पराणां** ] (तर्क-पराणां) तात्पर्यवतीनाम् । **वाचां**—"यस्यात्मा शरीरम्" इत्यादिश्रुतीनाम् । 'सर्वनाम्नो वृत्तिमात्र' इति तदुभयेति पुंवद्भावः । वस्त्वभिप्रायेणेदमुक्तम् । भेदश्रुतिभि-र्जीवेश्वरभेदावगमात्, अभेदश्रुतिभिश्च तयोरभेदावगमात्, भेदाभेदयोश्च विरोधादन्यतर-बाधनं विनानुपपत्तौ "यस्यात्मा शरीरम्" इत्यादिभिश्चिदचितोर्ब्रह्मशरीरत्वावगमात्, शरीरस्य च जातिगुणयोर्द्रव्यं [1] प्रतीव शरीरिणं प्रत्यपृथक्सिद्धप्रकारतैकस्वभावतया प्रकार-वाचिशब्दानां प्रकारिपर्यन्तशक्तत्वात् "तत्त्वमसि" इत्यादौ श्वेतकेतुशरीरकस्य सार्वज्ञ्यादि-विशिष्टस्य चैक्यं समानविभक्त्या बोध्यते यथा नीलमुत्पलमित्यादौ नीलत्वविशिष्टस्य उत्पल-त्वविशिष्टस्य चेति । भेदश्रुतिभिश्च प्रकारप्रकारिणोर्मिथो भेदः प्रदिपाद्यते । अतो भेदाभेद-श्रुत्योर्न विरोध इत्ययमर्थो घटकश्रुतिभिरवगम्यत इति वस्तुस्थितिमनुरुध्य 'तदुभयघटना-तत्पराणामि'त्युक्तम् । न तु घटकत्वं पराभ्युपेतमिति मन्तव्यम् ॥

**दूरेणैव प्रहाणम्**—अत्यन्तपरित्यागः । "यस्यात्मा शरीरम्" इत्यादीनामपि भेदश्रुतित्वात्तत्प्रयुक्तमप्रामाण्यमेकं, जगद्ब्रह्मणोर्व्यावहारिककार्यकारणभावाभ्युपगमवत् तथाविधशरीरशरीरिभावाभ्युपगमाभावात्तदंशेऽप्यप्रामाण्यं द्वितीयं, भेदश्रुतीनामसत्यविषय-कत्वादभेदश्रुतीनां चोक्तरीत्या स्वरूपमात्रोपस्थापकत्वाद्भेदाभेदयोरभावेन विरोधस्या-प्रसक्त्या तच्छमनाय घटकानपेक्षणाद्घटकत्वेनाप्यप्रामाण्यं तृतीयं, तदिदं 'दूरेणैव प्रहाणमि'त्यनेन विवक्षितम् । दूरेण प्रहाणे प्रहाणहानयोर्थसिद्धत्वात् । किं च तदुभयेत्यनेन ऐक्यवाचां सामान्येन परामर्शादनन्तरं योग्यतया विशेषनिश्चयसिद्धिः । तत्रैक्यश्रुतिरनेकविधा । काचित्समानविभक्तिनिर्देशेनाभेदबोधिका । यथा—"तत्त्वमसि" "ब्रह्मदाशा" इत्यादिका । काचिच्च सजातीयद्वितीयराहित्यात्मकैकत्वबोधिका । यथा

---

1. प्रति च.

"एकस्त्वमसि अद्वितीयम्" इत्यादिका। काचित्तु भेदनिषेधिका। यथा—"यत्र त्वस्य सर्वम्" "नेह नानास्ति" इत्यादिका। त्रिविधाया अप्यैक्यवाचस्तात्पर्यं घटकश्रुत्या बोध्यते। तत्र विशेषणद्वयाश्रयवस्त्वभेदस्त्वभेदश्रुत्यर्थः। शरीरतया चिदचिद्विशिष्टत्वेन सजातीयवस्त्वन्तरं नास्तीति सजातीयद्वितीयशून्यत्वात्मकैकत्वश्रुत्यर्थः। भगवत्प्रकारतया विना स्वनिष्ठं किंचिदपि नास्तीति भेदनिषेधश्रुत्यर्थ इति त्रिविधैक्यश्रुतितात्पर्यं "यस्यात्मा शरीरम्" इत्यादिश्रुत्या बोध्यते। सर्वस्या अप्यैक्यश्रुतेर्भेदश्रुत्या सह विरोधेन घटकश्रुत्या विना परस्परानुपमर्देन प्रामाण्यासिद्धेः। तत्र विशेषणविशेष्ययोर्विशेषणानां मिथो भेदः प्रथमद्वितीययोर्भेदश्रुत्यर्थः। तृतीये त्वब्रह्मात्मकत्वनिषेधेऽपि स्वरूपानिषेधाच्छेद एव भेदश्रुत्यर्थः। अतो जगद्ब्रह्मणोः शरीरशरीरितया विशेषणविशेष्यभावबोधकघटकश्रुतिभिर्भेदश्रुत्यभेदश्रुत्योः विरोधसमाधानेन प्रामाण्यमुपपाद्यत इति तदुभयघटनेत्याद्युक्तम्॥

प्रत्यक्षं—इन्द्रियजन्यं, आदिपदेनानुमानं गृह्यते तथाविधस्य, प्रमाणस्य, स्वरसगतिः—सविशेषवस्तुबोधकत्वस्वारस्यं,तस्याः, हतिः—व्याघातः, त्याग इत्यर्थः। प्रत्यक्षस्य, सन्मात्र (विषयका) [विषयकत्वा] भ्युपगमात्, अनुमानेन निर्विशेषवस्तुपक्षीकरणेन नित्यत्वादिसाधनात्, प्रपञ्चमिथ्यात्वानुमानेन धर्मिग्राहकप्रत्यक्षबाधाभ्युपगमाच्च प्रत्यक्षादिप्रमाणस्वारस्यहानिरित्यर्थः। तर्केत्यादि। तर्को नाम व्याप्यारोपेण व्यापकारोपः। तर्कयाम्यापादयामीत्याद्यनुभवसाक्षिको व्याप्तिग्रहादिद्वारा प्रमाणानुग्राहको ज्ञानविशेषः। तस्यापि सविशेषविषयत्वात् निर्विशेषवस्तुवादिनां तदनादरः स्पष्टः। प्रत्यक्षस्य सन्मात्रग्राहित्वे सर्वप्रतीतीनामविशेषप्रसङ्गात् प्रवृत्तिनिवृत्तिव्यवस्थाविरहप्रसङ्गः। निर्विशेषवस्तुन्यनुमानेनैकत्वादिसाधने साध्यसाधनधर्मैः सविशेषत्वप्रसङ्गः। ब्रह्मणः स्वयंप्रकाशत्वे तिरोधानासिद्धिप्रसङ्गः। तिरोधानेऽप्यनिवृत्तिप्रसङ्गः। प्रकाशस्वरूपस्य तिरोधाने स्वरूपनाशप्रसङ्गः। ब्रह्मणो ज्ञानविषयत्वे तज्ज्ञानान्मोक्षासिद्धिप्रसङ्गः। अनिर्वचनीयोत्पत्त्यभ्युपगमे तस्य पार्श्वस्थैरु[रनु]पलभ्यमानत्वप्रसङ्गः। प्रवृत्त्याद्यभावप्रसङ्गश्च। शब्दस्याप्यपरोक्षजनकत्वे प्रत्यक्षलक्षणादिसांकर्यप्रसङ्गः। दृग्दृश्ययोः संबन्धानुपपत्तिरित्युक्तग्राह्यलक्षणयोगाख्यतर्काभ्युपगमे चैतन्यव्यवहारासिद्धिप्रसङ्गः। भेदपदार्थनिरासे ब्रह्मजडयोरैक्यापत्तिरित्यादितर्काणां तैरनादरात् तर्कबाधश्च भूयान् इत्युक्तम्। चकारेण प्रमाणानामयथावस्थितप्राबल्यदौर्बल्यव्यवस्थाव्यत्यासस्समुच्चीयते। सौत्राणां च न्यायानां बाधः स्पष्ट एव। सोऽपि चकारेण संगृह्यते॥

तदिदं सर्वं स्वपक्षे नास्तीत्याह----तदेतदिति । भेदश्रुतिरभेदश्रुतिर्घटकश्रुतिः प्रत्यक्षादिप्रमाणं तर्कश्चेति पूर्वोक्तं सर्वमिदम्। लक्ष्मणाचार्यपक्षे-भगवद्रामानुजसिद्धान्ते। इतरथा पक्षान्तरोक्तप्रकारातिरिक्तप्रकारयुक्तं, क्रमेण सत्यविषयकत्वविशिष्टाभिधायित्व-विरोधशामकत्वसविशेषविषयत्वप्रतितर्कपराहत्यभावरूपसमीचीनप्रकारयुक्तं भवतीत्यर्थः । तदुपपादनं तु ग्रन्थगौरवभिया न लिख्यते । अत्र तदेतत् सकलमितरथा----इत्यनेन

" आदौ भेदश्रुतीनामृतविषयकता मुख्यता चैक्यवाचाम्
आरादेवानुरोधस्तदुभयघटनातत्पराणां च वाचाम् ।
प्रत्यक्षादिप्रमाणस्वरसगतिमितिस्तर्कबोधश्च भूयान् "

इति पाठ्यमिति सूच्यते । 'मायावादे' 'लक्ष्मणाचार्यपक्षे' इत्याभ्यां स्वपरपक्षयोर्लक्ष्मणमेघनादन्यायः सूचितः ॥ (49)

*　　*　　*　　*

[ अव० ] पूर्वश्लोकोक्तान्येव परमतदूषणानि क्रमेण बहुभिः श्लोकैर्विस्तरेणाह—
[ नेत्यादि ]

[ मू० ] न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत्
किंत्वद्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम् ।
अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थः प्रयासो यतः
प्रख्यातादितरस्तु शास्त्रविषयो भेदस्त्वदद्वैतवत् ॥ (50)

[ व्या० ] उपनिषद्वाचः—वेदान्तवाक्यानि । द्वैतं----भेदम् । न प्रतिपादयन्ति—न बोधयन्ति । द्वयोर्भावो द्विता, द्वितैव द्वैतम् । प्रज्ञादित्वात् स्वार्थेऽण्प्रत्ययः । द्वित्ववाचिना च द्वैतशब्देन तद्व्यापको भेदो लक्ष्यते । पृथक्त्वनिवेशित्वात् सङ्ख्यया कर्मभेदः स्यादित्युक्तेः । वेदान्तवाक्यानि न भेदप्रतिपादकानीत्यर्थः । कुत इत्यत्राह—प्रसिद्धं हीति । तत्—द्वैतम् । प्रसिद्धं हि—प्रत्यक्षाद्यवगतं खलु । अतो भेदो न शास्त्रप्रतिपाद्य इत्यर्थः । " शास्त्रं त्वसन्निकृष्टेऽर्थे शब्दविज्ञानात् " इति सूत्रमत्राभिप्रेतम् ॥

" असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।
ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा ॥ "

इत्युक्तरीत्या शास्त्रप्रतिपाद्यत्वरूपेण मानान्तराबोधितत्वस्य शास्त्रप्रतिपाद्यत्वेऽपेक्षितत्वात्तद्भावादस्य न शास्त्रप्रतिपाद्यत्वमिति भावः । अत्र घटपटादिभेदस्य प्रत्यक्षसिद्धत्वं नाहमीश्वर इति [स्वस्य] ईश्वरभेदप्रत्यक्षत्वं च विवक्षितम् । [1] तत्र हि शास्त्रप्रतिपाद्यं किमित्यत्राह—किं त्विति । किं तु—भेदस्य शास्त्रप्रतिपाद्यत्वाभावे । अद्वैतम् अभेदः । अनन्यगोचरतया—शास्त्रेतरप्रमाणाविषयत्वेन हेतुना । तद्वेद्यम् उपनिषत्प्रतिपाद्यम् । आस्थीयताम्—प्रतिज्ञायताम् । युष्माभिरिति शेषः । कुत इदमित्यत्राह—अप्राप्ते इत्यादि । शास्त्रम् अज्ञातज्ञापनैकप्रवणंवेदरूपं हितानुशासनम् । अप्राप्ते—साधकबाधकप्रमाणाविषयेऽर्थे । अर्थवत्खलु—अज्ञातज्ञापनरूपप्रयोजनवत् किल । अतो मानान्तरानधिगतत्वादभेद एव शास्त्रबोध्य इत्यर्थः । इति प्रयासः—उक्तार्थप्रतिपादनप्रयुक्तः क्लेशगर्भः प्रयत्नः । यसु प्रयत्ने । व्यर्थः—निष्प्रयोजनः । कुत इदमित्यत्राह—यत इति । प्रख्यातात्—मानान्तरविषयात्, घटपटादिभेदात् । इतरो भेदः—कार्यकारणभावशेषशेषिभावनियन्तृनियम्यभावोपास्योपासकभावप्राप्यप्रापकभावरूपो भेदस्तु । त्वदद्वैतवत् शास्त्रविषयः त्वदभिमतजीवेश्वराभेदेन तुल्यं, शास्त्रप्रतिपाद्यत्वरूपशास्त्रसंबन्धभागीत्यर्थः । विसिनोतीति विषयः । ' षिञ् बन्धने ' अत'स्तेन तुल्यं क्रिया चेद्वि'ति वतिप्रत्ययोपपत्तिः । अध्याहृतभवतिक्रियया वा तदुपपत्तिरिति । यथा सोऽयं देवदत्त इत्याद्यैक्यप्रत्यक्षेऽपि जीवपरयोरैक्यस्य तदविषयत्वात् शास्त्रप्रतिपाद्यत्वं त्वया स्वीक्रियते ; तथा घटपटादिभेदस्य प्रत्यक्षादिसिद्धत्वेऽपि जीवपरयोर्नियन्तृनियम्यभावादिरूपभेदस्य तदविषयत्वाच्छास्त्रप्रतिपाद्यत्वमस्माभिः स्वीक्रियते । अतो न द्वैतं प्रतिपादयन्तीत्यादिनोक्तः प्रयासस्तव वादिविजयानुपयुक्तत्वाद्विफल इति मृषावादिनं प्रत्युक्तिरियं सिद्धान्तिनः ॥

तदिदमाहुः भट्टसुदर्शनपादाः—यदि भेदमात्रस्य लोकसिद्धत्वात् " अप्राप्ते हि शास्त्रमर्थवत् " इति न्यायादभेद एव शास्त्रवेद्य इत्युच्यते ; तर्हि सोऽयं

1. तर्हि

देवदत्त इत्यादावभेदमात्रस्य लोकसिद्धत्वात् अप्राप्ते शास्त्रस्यार्थवत्त्वाच्च शास्त्रेणा-भेदप्रतिपादनमयुक्तम्। देवदत्ताद्यैक्यं हि लोकसिद्धम्। न जीवपरयोः। अतस्त-योरभेदः शास्त्रवेद्य इति चेत्तर्हि घटपटादिभेद एव लोकसिद्धो न तु जीवपरयोर्नियम्यत्व-नियन्तृत्वधार्यत्वधारकत्वशेषत्वशेषित्वव्याप्यत्वव्यापकत्वलक्षणभेदो न लोकसिद्ध इति स भेदः शास्त्रप्रतिपाद्य एवेति"॥ (50)

* * * * *

[अवं०] जीवानां मिथो भेदस्य श्रुतिप्रतिपाद्यत्वमाह—[यदित्यादि]

[मू०] यच्छ्वेताश्वतरश्रुतिर्नृबहुतामेको बहूनामिति
ब्रूते तत्र विधिर्विशिष्टविषयस्त्वष्टाकपालादिवत्।
नित्यत्वात्मबहुत्वमत्र निगमादन्यत्र विद्मः कथं
प्रत्यक्त्वेन पराक्तया स्वपरयोर्मुक्तौ च भेदः स्फुटः॥ (51)

[व्या०] श्वेताश्वतरश्रुतिः—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विद-धाति कामान्" इति श्वेताश्वतरोपनिषद्गतमन्त्रः। "एको बहूनाम्" इति एको बहूनामित्यंशेन। नृबहुतां—आत्मबहुताम्। ब्रूते—बोधयति इति यत्। तत्र—निरुक्तश्रुतेरात्मबहुत्वबोधकतावाद इत्यर्थः। अष्टाकपालादिवत्—"यदाग्नेयोऽष्टाकपालः" इत्यादिविधिवत्; अष्टाकपालत्वविशिष्टाग्नेयपुरोडाश-विधिवदित्यर्थः। अत्रापि वतिप्रत्ययोपपादनं पूर्ववद् द्रष्टव्यम्। विशिष्टविषयो विधिः—नित्यबहुचेतनविशिष्ट [प्रदान] (प्रधान) विषयाज्ञातज्ञापनरूपविधिः। आस्थीयते—प्रतिज्ञायते। आस्थीयतामित्यनुवृत्तस्य विभक्तिविपरिणा-मेन संबन्धः। तुशब्दः शङ्काव्युदासकः। "नित्यो नित्यानां चेतन-श्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यस्य कामविधानपरत्वान्न नित्यत्वबहुत्वयोस्तात्पर्यम्; तथा सति वाक्यभेदप्रसङ्गात्; अनपेक्षितं चेदं चेतन-नित्यत्वबहुत्वप्रतिपादनमिति शङ्काद्वयम्; विशिष्टविधित्वाश्रयणेनानित्यानामल्पानां कामप्रदानादपि नित्यानां बहूनां कामप्रदाने कथिते हि कामप्रदानस्यातिशयो भवतीति कामप्रदानेऽतिशयबोधलिप्सयापेक्षितत्वोपपादनेन च व्युदस्तमिति सूचनाय तुशब्दप्रयोगः। ननु आत्मबहुत्वस्य लोकसिद्धत्वान्न तत्र शास्त्रस्य तात्पर्यं,

'अप्राप्ते हि शास्त्रमर्थवदि'ति शङ्कायामाह—नित्यत्वेत्यादि । नित्यत्वसहिता आत्मानः नित्यत्वात्मानः। सुपेति वा तृतीयेति वा योगविभागात् समासः। नित्यत्वविशिष्टात्मनां बहुत्वं नित्यत्वात्मबहुत्वम्। अत्र—लोके, निगमाद्न्यत्र—उपदर्शितश्रुतेरन्यतः, प्रत्यक्षादित इत्यर्थः। कथं विद्मः—न विद्म इत्यर्थः। हेतोरधिकरणत्वविवक्षयान्यत्रेति सप्तमी॥

अयं भावः—अचित्संसृष्टात्मबहुत्वप्रतीतिर्लोकसिद्धा । परिशुद्धात्मस्वरूपबहुत्वस्य तु लोकसिद्धत्वाभावात् तत्र शास्त्रस्य तात्पर्यं संभवत्येव। श्रुतौ हि नित्यानां बहूनां चेतनानामिति संबन्धाद्विशिष्टस्य वैशिष्ट्यमिति रीत्या नित्यत्वविशिष्टस्य बहुत्वलाभान्नित्यत्वे बहुत्वावच्छेदकता लभ्यते । औपाधिकाकारस्यानित्यत्वान्निष्कृष्टस्वरूपस्यैव नित्यत्वात्तदवच्छेदेनात्मबहुत्वबोधने सति परिशुद्धात्मस्वरूपबहुत्वं सिद्धं भवतीति तत्र शास्त्रतात्पर्यं संभवत्येवेति। न च श्रुतौ नित्यानां नित्यः चेतनानां चेतन इति संबन्धः सान्निध्यादिति वाच्यम्। 'संभवति सामानाधिकरण्ये वैयधिकरण्यस्यानुचितत्वात्' एको बहूनामित्यत्र वैरूप्यापत्तेश्च तदयोगात्। सान्निध्यं तु नित्यानां कामविधानं नित्यस्योचितमित्यौचित्यव्यञ्जनोपक्षीणमिति न सामानाधिकरण्यबाधकम् । सन्निधिश्च दुर्बलप्रमाणत्वान्न श्रुतिरूपं सामानाधिकरण्यं बाधितुमलम् । श्रुतौ नित्यानां बहूनामित्यत्र विशिष्टस्य वैशिष्ट्यमिति रीत्यैव बोध इति सूचनायैव श्लोके नित्यत्वात्मबहुत्वमिति तृतीयासमासगर्भः सन्दर्भः स्वीकृतः, न तु नित्यात्मबहुत्वमिति कर्मधारयगर्भः । यद्वा नित्यत्वं चात्मबहुत्वं च नित्यत्वात्मबहुत्वमिति समाहारद्वन्द्वः । तस्य च समूहार्थकत्वात् समूहस्य चैककालावच्छेदेनैकदेशस्थानेकवस्त्वात्मकत्वान्नित्यत्वबहुत्वयोरात्मन्येककालावच्छिन्नवृत्तिकत्वसिद्ध्या परिशुद्धात्मस्वरूपबहुत्वलाभः । श्रुतौ च नित्यानां बहूनामिति सामानाधिकरण्योपगमात्। तत्र च कालैक्यमपि भासत इति तान्त्रिकाभ्युपगमान्नित्यत्वबहुत्वयोरात्मस्वेककालावच्छिन्नवृत्तिकत्वलाभाच्छ्रुतिगतसामानाधिकरण्यं श्लोके समाहारद्वन्द्वप्रयोगेण विवृतम्। तदुक्तं सुदर्शनभट्टपादैः—"नित्यत्वसमानाधिकरणबहुत्वेऽभिहिते परिशुद्धात्मस्वरूपबहुत्वं ह्युक्तं भवति" इति। अतः पृथक्त्वनिवेशित्वनयादात्मबहुत्वमात्मभेदलम्भकमिति हृदयम्॥

मुक्तावपि भेदश्रवणान्निष्कृष्टात्मनां मिथो भेद इत्याह—प्रत्यक्त्वेनेत्यादिना। प्रत्यक्त्वेन—अहंबुद्धिबोध्यत्वेन । पराक्तया—इदंबुद्धिबोध्यत्वेन स्वपरयोः मुक्तानां स्वस्य चान्यस्य च मिथो भेदः स्फुटः श्रुतिषु स्पष्ट इत्यर्थः। प्रत्यक्त्वपरा-

स्वरूपविरुद्धधर्माध्यासान्मोक्षदशायामात्मभेदः, श्रुतिसिद्ध इति भावः । श्रुतिषु मुक्तानामहमिदंव्यवहारः तत्र तत्र द्रष्टव्यः । [1](यद्वा स्वपरयोरित्यन्तं संसारदशायां भेदसिद्धिपरम्) । मुक्ताविति मोक्षदशायां तत्सिद्धिपरम् । इदं च भेदश्रुतीनामनृतविषयतानिरसनं 'भेदनिषेधार्थं भेदानुवादरूपाणि भेदश्रवणानि' इति पक्षनिरासस्याप्युपलक्षणम् ॥ (51)

* * * *

[अव०] "आदौ भेदश्रुतीनामनृतविषयता" इत्युक्तपराभ्युपगमो विस्तरेण दूषितः । अथ "लक्षणा चैक्यवाचाम्" इत्युक्तं तत्पक्षं विस्तरेण दूषयति—सामानाधिकरण्येत्यादि]

[मू०] सामानाधिकरण्यभागिषु पदस्तोमेषु सर्वेषु किं
प्रत्याय्यं व्यतिरिच्यते प्रतिपदं वक्तव्यमद्वैतिना ।
यद्वा नेति न चेदनर्थकतया नैकातिरिक्तं पदं
पठ्येत प्रतिवादिनस्त्वितरथा युक्तिः स्वमासीदति ॥ (52)

[व्या०] परैर्हि समानाधिकरणवाक्यस्याखण्डार्थत्वमुक्तम् । तथा हि—सामानाधिकरण्यस्यैकार्थपरत्वव्युत्पत्तेरैकार्थ्यस्य च पदानां विशेषणमात्रपरत्वे विशिष्टपरत्वे चासिद्धेः स्वरूपमात्रैक्यपरत्वं सत्यादिसमानाधिकरणपदानामिति । तदिदं निरस्यति—सामानाधिकरण्येत्यादिना । सर्वेषु—व्यधिकरणेषु समानाधिकरणेषु च । पदस्तोमेषु—वाक्येषु मध्ये । सामानाधिकरण्यभागिषु—समानाधिकरणेषु [2] पदेषु, समानमेकमधिकरणं वाच्यं तेषां तथोक्तानि समानाधिकरणानि, तेषां भावः सामानाधिकरण्यं, तत्र भागः संबन्धः तद्वत्स्वित्यर्थः [वाक्येषु] । करणस्यैवाधिकरणत्वविवक्षया सप्तमी । प्रत्याय्यं—बोध्यम् । प्रतिपदं—तत्तत्पदेषु । व्यतिरिच्यते भिन्नं भवति । यद्वा—अथवा । नेति—न व्यतिरिच्यत इति प्रश्ने । अद्वैतिना – निर्विशेषव-

1. यद्वेत्यारभ्य । सिद्धिपरमित्यन्तं नास्ति.

2 वाक्येषु

स्त्वभ्युपगमवता मृषावादिना । किं वक्तव्यं—किंशब्दः क्षेपार्थकः । उक्त-कल्पयोः नैकोऽपि कल्पो वक्तुं शक्यत इत्यर्थः । समानाधिकरणपदेषु किंचित्प-दबोध्यस्य तदितरपदबोध्याद्विशेषोऽस्ति वा न वेति प्रश्ने मृषावादिना न किंचिद-प्युत्तरं वक्तुं शक्यमित्यर्थः । कुत इत्यत्राह—**न चेदित्यादि** । बुद्धिस्थत्वात् द्वितीयं शिरः प्रथमं दूष्यते । **न चेत्प्रत्याय्यं**—न व्यतिरिच्यते चेदित्यर्थः । **एकातिरिक्तं**—विवक्षिततत्तदेकैकपदातिरिक्तम् । **पदम् अनर्थकतया** पदा-न्तराबोधितार्थबोधनरूपप्रयोजनविरहेण हेतुना । **न पठ्येत**—नाधीयीतेत्यर्थः । " उक्तार्थानामप्रयोगः " इति न्यायादिति भावः । तथा च पठ्यमानस्य वैयर्थ्य-प्रसङ्ग इति हृदयम् ॥

इदमुपलक्षणं—पदानां पर्यायत्वप्रसङ्गः । प्रवृत्तिनिमित्तभेदाभावेन सामा-नाधिकरण्यलक्षणहानिप्रसङ्गः । सामानाधिकरण्यप्रत्याय्यस्य ऐक्यस्य स्वरूपातिरेके सखण्डत्व-प्रसङ्गः । अनतिरेके तस्य प्रातिपदिकावगतस्वरूपाविरोधान्न विशेषणत्याग इत्यपि बोध्यम् । सर्वेषु पदस्तोमेष्वित्यनेन सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यमिति समानाधिकरणपदेषु केवलं व्युत्पत्तिसिद्धप्रवृत्तिनिमित्तप्रहाणं नोचितम् । समानविभक्त्यवगतमैक्यं तु प्रातिपदिकावगतविशेषणसंबन्धाविरोधेन प्रधानभूतविशेष्यैक्य-परमित्ययमर्थः सूचितः ॥

प्रथमं शिरो दूषयति—**इतरथेत्यादिना** । **इतरथा**—प्रत्याय्यं प्रतिपदं भिन्नं चेत् सत्यादिपदानां तत्तत्पदार्थविरोधिव्यावृत्तिमात्रपरत्वे विरोधिव्यावृत्त्यवच्छिन्नस्व-रूपपरत्वे [1] चेत्यर्थः । **प्रतिवादिनो युक्तिः** असत्प्रतिवादिनोऽखण्डवाक्यार्थसाधकत्वे-नाभिमतः समानविभक्त्यवगतैक्यासिद्धिरूपो हेतुः । **स्वम्**—प्रतिवादिनः स्वीयं पक्षम् । **आसीदति**—व्याघातकभावेन प्राप्नोतीत्यर्थः । सत्यादिपदानां विरोधिव्यावृत्तिमात्रपरत्वे प्रतियोगिभेदेन व्यावृत्तिभेदादैक्यासिद्धिः, व्यावृत्त्यवच्छिन्नस्वरूपपरत्वे च व्यावृत्तीना-मुपलक्षणत्वे पदान्तरवैयर्थ्यम्, विशेषणत्वे त्वेकार्थत्वासिद्धिरिति दूषणं प्रतिवादिनः स्वपक्षे-ऽप्यापततीति भावः । विशेषणभूतार्थभेदेऽपि विशेष्यभूतप्रधानार्थैकार्थ्यसिद्धिरिति च पक्षद्वयेऽपि समानम् । परं तु सिद्धान्ते पदानां मुख्यता, पक्षान्तरे तु तत्तद्विरोधिव्यावृत्ति-लक्षकत्वमिति विशेष इति तुशब्दार्थः ॥ (52)

---

1 वे

[ अ० ] इत्थं श्लोकत्रयेण, " आदौ भेदश्रुतीनामनृतविषयता लक्षणा चैक्यवाचाम् " इत्युक्तपराभ्युपगमद्वयं विस्तरेण दूषितम् । "दूरेणैव प्रहाणं तदुभयघटनात्तत्पराणां च वाचाम्" इत्येतत्तु, घटकश्रुतीनामपि भेदश्रुतित्वेन भेदश्रुत्यनृतविषयता-दूषणेनैव दूषितमिति पृथङ् न दूषितम् । " दूरेणैव " इत्यादिना पृथगुद्देश-सूचितम् "यस्यात्मा शरीरम् " इत्यादिषु शरीरादिशब्दानां तादधीन्यलक्षकतायाः पराभिमतत्वेन तदंशे लक्षणाप्यापततीत्येवंरूपमधिकदूषणं तु "दूरेणैव प्रहाणम् " इत्यत्रैवोक्तमिति न तत्र विस्तरापेक्षा । अतोऽत्र निर्देशक्रमेण " प्रत्यक्षादि-प्रमाणस्वारस्यहानिम् " इदानीं विशदयति— [ दृश्यत्वादित्यादि ]

[ मू० ] दृश्यत्वादनृतं विगीतमिति यद्दृष्टान्तयन्तो जगुः
शुक्त्यारोपितरूप्यमत्र कतिचित्तद्भाचक्ष्महे ।
धर्मिग्राहकमानधिक्कृतमिदं सोपाधिकत्वं पुनः
सौत्रं व्यक्तमभङ्गुरं व्यभिचरल्लिङ्गं च भङ्गाय वः ॥ (53)

[ व्या० ] परैरित्थमुक्तम्—'विगीतः प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरूप्यवत्' इत्यनुमानेन प्रपञ्चमिथ्यात्वसिद्धिः । स्वाभावाधिकरणे प्रतीयमानत्वं, स्वसमानाधिकरणात्यन्ता-भावप्रतियोगित्वं, ज्ञाननिवर्त्यत्वं वा मिथ्यात्वमिह साध्यधर्मः । ज्ञानविषयत्व-रूपदृश्यत्वं हेतुः । द्रव्यसमवेतप्रत्यक्षे संयुक्तसमवायस्यावश्यकत्वेन तदभावेन रजतत्वान्यथाख्यातेरसंभवादनिर्वचनीयं साक्षिभास्यं शुक्तावपूर्वं रजत-मुत्पद्यते । तच्च द्रव्यं दृङ्निवर्त्यं चेति तदेव व्याप्तिनिश्चयभूमितया दृष्टान्त इति । तदिदमनुवदति— दृश्यत्वादित्यादिना । अत्र कतिचित् मृषावादिन इत्यर्थः । शुक्त्यारोपितरूप्यम्—शुक्तिविशेष्यकभ्रमप्रकारभूतं रजतम् ; यद्वा रजतकारणतया क्लृप्तसामग्र्यभावेन, पार्श्वस्थानुपलम्भेन च तत्रासंभावितो-त्पत्तिकमेव केवलं स्वीयकुदृष्ट्या शुक्तावुत्पन्नतया कथितं रजतम् । दृष्टान्तयन्तः सन्तः—व्याप्तिनिश्चयभूमिभूतदृष्टान्तमाचक्षाणाः सन्तः । दृष्टा-न्तस्य साध्यवैकल्यरूपसिद्धान्त्यभिमतदूषणस्फोरणाय शुक्त्यारोपितेत्युक्तम् । उत्पत्त्यर्थाद्रोहतेः णिजन्तात् कर्मणि क्तः । अत्र च दृष्टान्तयन्त इत्यत्र ' तत्करोति तदाचष्टे ' इति सूत्रेणाख्यानार्थको णिच् । ज्ञानप्रत्यासत्त्युपगमात्, पञ्ची-करणसिद्धरजतावयवसत्त्वोपगमाद्वा रजतान्यथाख्यातेः, यथार्थख्यातेर्वा उपगमात्

रजतग्रहोपपत्तेश्च न तत्र रजतोत्पत्त्यपेक्षेति हृदयम् । विगीतं—विवादाध्यासितम् । जगदिति शेषः । उत्तरश्लोके जगत इत्युक्तेः । अयं पक्षनिर्देशः । अनृतं—ज्ञाननिवर्त्यत्वरूपमिथ्यात्ववत् । इदं साध्यसमर्पकम् । दृश्यत्वात्—ज्ञानविषयत्वात् । इयं हेतूक्तिः । इति यत् 'विमतं जगन्मिथ्या दृश्यत्वात् शुक्तिरूप्यवत्' इत्याकारकं यदनुमानम् । जगुः—अवदन् । शिशुपशुप्रायपुरुषरञ्जकत्वात् गानत्वोक्तिः । "तस्य वैदिकसदः शिखामणेरग्रतः कपरवादिसंभवः" इति पूर्वोक्तदिशा जगुरिति परोक्षनिर्देशः । तत्रेदमाचक्ष्महे—तस्मिन्ननुमाने कालात्ययापदेशसोपाधिकत्वव्याघातात्मकदूषणत्रयमिदम् उपरितनसार्धश्लोकेन सूत्रकारहृदयानुसारिणो वयं वदाम इत्यर्थः । तत्रास्य श्लोकस्योत्तरार्धेन प्रथमं कालात्ययापदेशं सोपाधिकत्वं चाह—धर्मिग्राहकेत्यादिना । इदं—जगत्पक्षकदृश्यत्वहेतुकमिथ्यात्वानुमानम् । धर्मिग्राहकमानेन मिथ्यात्वरूपसाध्यधर्मं प्रति धर्मिभूतप्रपञ्चग्राहिणा प्रत्यक्षेण प्रपञ्चसत्यत्वग्राहकेण, धिक्कृत—साध्याभावग्रहणाद्बाधितम् । अत इदमनुमानं दुष्टमित्यर्थः । तदाहुः सुदर्शनभट्टपादाः—"तत्राश्रयः प्रतीतो वा न वा ? न चेदाश्रयासिद्धिः । [प्रतीतत्वे प्रतीतिश्च] (प्रतीतिमत्त्वप्रतीतिश्च) प्रत्यक्षादिप्रमाणैः सत्यत्वेनेति तस्य मिथ्यात्वसाधनं धर्मिग्राहकप्रमाणबाधितम्" इति । तथा चण्डमारुतेऽप्युक्तं—"प्रपञ्चविषयं ज्ञानं स्वप्रकाशं स्वतः प्रमाणं च । अतो घटादिविषयकत्वप्रमात्वग्राहिणा-प्रत्यक्षेण प्रमाविषयत्वं घटादौ गृहीतमिति उष्णत्वप्रत्यक्षेणानुष्णत्वानुमानस्येव मिथ्यात्वानुमानस्यापि बाधः" इति । सोपाधिकत्वमित्यादि—(पुनश्शब्दस्तुशब्दार्थकः । चकारो विशेषणत्वयसमुच्चयपरः) सौत्रं—"वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रोक्तम् । अभङ्गुरं—अभग्नं, पक्षावृत्तित्वसाध्यसमव्याप्त्योः सत्त्वेनाप्रत्याख्येयोपाधित्वकम् । व्यभिचरत् साध्याभाववद्वृत्ति, लिङ्गं दृश्यत्वादिति हेतुर्येन तत्तथोक्तम् । ज्ञाप्यत्वं विग्रहवाक्यस्थतृतीयार्थः । हेतुव्यभिचारज्ञापकमित्यर्थः । उपाधेर्व्यभिचारोन्नायकत्वादेवमुक्तम् । सोपाधिकत्वं प्रतिपन्नोपाधौ बाधितत्वरूपोपाधिमत्ता । पुनश्शब्दो वाक्यालङ्कारः । चकारः पूर्वोक्तदोषसमुच्चायकः । वः—वादिनां युष्माकम् । भङ्गाय—पराजयहेतुः । कालात्ययापदेशस्य साक्षात्सोपाधिकत्वस्य चानैकान्तिकद्वारा वादिपराजयावहत्वादिति भावः । अथवा कालात्ययापदिष्टं दृश्यत्वं च अभङ्गुरं

सौत्रं तस्य सोपाधिकत्वं च, पुनश्शब्दश्चशब्दार्थकः ; ब्रह्मण्यनैकान्तिकं दृश्यत्वादिति लिङ्गं च वः पराजयहेतुरिति योजना । श्रुतिस्मृतिस्वारस्यात् ब्रह्मणि दृश्यत्वं वर्तत इतीत्थमुक्तम् । तदाहुः—'दृश्यत्वं च ब्रह्मणि व्यभिचारि' इति । लिङ्गमिति सामान्योक्त्या व्यावर्तमानत्वादेरपि दूषणं सिद्धम् । तदिदं सोपाधिकत्वं भट्टसुदर्शनपादैर्विस्तरेणोक्तम् । तत्तु तत्रैवानुसन्धेयम् । व्यक्तमित्यनेन बालानामपि इदं सोपाधिकत्वं स्फुटमिति वादिनः प्रयोगाकौशलातिशयाविष्करणम् ॥ (53)

* * * * *

[ अ० ] अथ व्याघातमाह— [ मिथ्यात्वमित्यादि ]

[ मू० ] मिथ्यात्वं भ्रान्तिसिद्धं यदि खलु जगतः साध्यते सिद्धसाध्यो
हेतुः सत्यः प्रपञ्चो भवति हि यदि वा सत्यमद्वैतहानिः ।
साध्यं ब्रह्मस्वरूपं यदि भवति तदा सिद्धसाध्यत्वमेव
स्यादेवं च प्रपञ्चव्युदसनसरणिर्दूरतस्ते निरस्ता ॥ (54)

[व्या०] अत्र यत्तदिति पदद्वयमध्याहर्तव्यम् । तथा च जगतो यन्मिथ्यात्वं साध्यते तद्भ्रान्तिसिद्धं यदीति योजना । भ्रान्तिसिद्धं भ्रान्तिप्रकारभूतं, मिथ्याभूतमिति यावत् । जगतः सिषाधयिषितस्य मिथ्यात्वस्य मिथ्यात्वं चेदित्यर्थः । हेतुः—दृश्यत्वादिकः । सिद्धसाध्यः—सिद्धं मानान्तरावगतं साध्यं यस्येति विग्रहः । अत्र स्यादित्यपकर्षः । अत्र यथाश्रुते हेतोः सिद्धसाधनत्वं दोष इति प्रतीयते । तत्तु नास्ति । तदुक्तं चण्डमारुते "वस्तुतो मिथ्यात्वस्य मिथ्यात्वेऽपि तेन रूपेण मिथ्यात्वस्यासाध्यत्वात् सिद्धसाधनासंभवादतोऽर्थान्तरमेव" इति । "मिथ्यात्वस्य मिथ्यात्वे मिथ्याभूतस्यारोपितपीतिम्नः श्वैत्येनेव पारमार्थिकसत्यत्वेनाविरोधादर्थान्तरम्" इति च । अतोऽत्र सिद्धसाध्यो हेतुरित्यस्यार्थान्तरं स्यादित्यर्थः । तत्फलितमाह—सत्यः प्रपञ्चो भवतीति । आरोपितमिथ्यात्वस्य पारमार्थिकसत्यत्वेन विरोधाभावान्न प्रपञ्चसत्यत्वहानिरित्यर्थः । यदि वेत्यादि । तत् मिथ्यात्वं सत्यं यदीत्यर्थः । अद्वैतहानिरित्यत्र तदा तस्य ब्रह्मस्वरूपातिरेक इत्यादिः ।

सिषाधयिषितस्य मिथ्यात्वस्य सत्यत्वे तस्य ब्रह्मस्वरूपातिरेके च सति ब्रह्मणः सत्येन तेन सद्वितीयत्वप्रसङ्ग इत्यर्थः। सत्यस्यैव तस्य ब्रह्मस्वरूपानतिरेकमाशङ्क्य निराकरोति—साध्यं ब्रह्मस्वरूपं यदि भवतीति। ब्रह्मस्वरूपानतिरेके हि नाद्वैतहानिः, न वा जगतः सत्यत्वमिति शङ्काशयः। सिद्धसाध्यत्वमेव स्यात्—अर्थान्तरमेव स्यात्। ब्रह्मस्वरूपस्यास्माभिरङ्गीकारादित्यर्थः। एवकारेण पूर्वोक्तदोष एवापततीति सूच्यते। ततः फलितमाह—एवं चेति। एवम्—उक्तरीत्या ते प्रपंचव्युदसनसरणिः त्वदुक्तजगन्मिथ्यात्वानुमानप्रक्रिया। दूरतो निरस्ता। साध्यधर्मपारमार्थ्यापारमार्थ्यविकल्पादिना व्याघातप्रसंजनात् दूषितेत्यर्थः। माध्यमिकोक्तज्ञानबाध्यत्वस्य भवता बाध्यत्वाभ्युपगमान्नेयमप्रामाणिकधर्मपरम्परापादनेन दूषणरूपनित्यसमेति सूचनाय चशब्दप्रयोगः। तदिदमाहुर्भट्टसुदर्शनपादाः—"साध्यधर्मस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्ये चेदद्वैतहानिः। दृश्यत्वहेतोरनैकान्त्यं च; परमार्थेऽपि तस्य वृत्तेः। अपारमार्थ्ये प्रपञ्चसत्यता। 'बाध्यकबाधे बाध्यस्वरूपाबाधः' इति न्यायात्" इत्यादिना॥ (54)

* * * *

[अव०] ननु "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रस्य योगाचारोक्ते 'जागरितप्रत्ययो निरालम्बनः वेदनत्वात्, स्वप्नप्रत्ययवत्' इत्यनुमाने सोपाधिकत्वप्रदर्शनपरत्वात्, कथं मृषावाद्युक्तमिथ्यात्वानुमाने सोपाधिकत्वप्रदर्शनपरतोक्तिरिति चेत्? अत्राहुः—मृषावादिनां योगाचाराणां चार्थमिथ्यात्वाभ्युपगमस्याविशेषान्न दोष इति। तदुक्तं भट्टसुदर्शनपादैः—"प्रतीतत्वे सति बाधार्हत्वस्य उभयाभिमतत्वाच्च" इति, "कारणदोषबाधप्रत्यययोरनिर्वाच्यपक्षेऽप्युपाधित्वोपपत्तेरविशिष्टत्वात्" इति च। तथा चण्डमारुतेऽप्युक्तम्—"जागरितप्रत्ययो निरालम्बनः वेदनत्वात् स्वाप्नप्रत्ययवत्" इति बौद्धानुमानम् "वैधर्म्याच्च न स्वप्नादिवत्" इति, सूत्रभाष्ये भगवता दूषितम्। मायिना 'प्रपञ्चो मिथ्या दृग्विषयत्वात् शुक्तिरजतस्वाप्नाद्यर्थादिवत्' इत्युक्तम्। एवं च ज्ञानत्वेन मिथ्याविषयत्वसाधनस्य ज्ञानविषयत्वेन मिथ्यात्वसाधनस्य चाविशेषात्, ज्ञानत्वहेतुदूषणान्येव तद्विषयत्वहेतोरपि भवन्ति" इति। अतः सौत्रं सोपाधिकत्वमित्येतदुपपादनाय योगाचाराणां मृषावादिनां च प्रपञ्चमिथ्यात्वोपगतावविशेषमाह—[चिन्मात्रेत्यादि]

[मू०] चिन्मात्रव्यतिरेकि वस्तु सकलं मिथ्येति जोघुष्यते
योगाचारमते यदौपनिषदीकर्तुं तदाकृष्यते ।
मायावादिभिरप्रतीतनिगमन्यायप्रमाणान्तर-
प्रस्थानैरपहस्तयन्ति हि सह न्यायैः प्रमाणानि तत् ॥ (55)

[व्या०] योगाचारमते—वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकानां चतुर्णां बुद्धशिष्याणां मध्ये तृतीयस्य योगाचाराख्यस्य मते। चिदेव चिन्मात्रम्। मयूरव्यंसकादित्वान्मात्रशब्देन समासः। 'मात्रं कार्त्स्न्येऽवधारणे' इतिकोशः। तद्व्यतिरेकि—(स्वरूपातिरिक्तस्वगतभेदशब्दितयावद्विशेषशून्ये) संविद्व्यतिरिक्तम्। सकलं—ज्ञातृज्ञेयादिरूपम्। वस्तु—पदार्थजातम्। सिद्धान्तेन वस्तुत्वोक्तिः सांप्रतिकसत्यत्वेन पराभिमतेन वा वस्तुत्वोक्तिः। मिथ्येति यत् जोघुष्यते—यन्मिथ्यात्वानुमानं पौनःपुन्येनोच्यते। घुषिधातोः क्रियासमभिहारे यङन्तात् कर्मणि यत्प्रत्ययः। जागरितप्रत्यय इत्यादिकं यद्योगाचारैरसकृदुक्तं जगन्मिथ्यात्वानुमानम्। तत्—मिथ्यात्वानुमानं, कर्म। इदं च कर्तुमित्यत्रान्वेति। अप्रतीतम् अप्रमितं। निगमानां प्रपञ्चसत्यत्वपराणां स्वनिष्ठवस्तुनिषेधपराणां ब्रह्मणि हेयगुणनिषेधपराणां च वेदानां। न्यायानां सामान्यविशेषोत्सर्गापवादोपक्रमविरोधाधिकरणसर्वशाखाप्रत्ययादिन्यायानाम् अपच्छेदजर्तिलादिन्यायानां च। प्रमाणान्तरयोः प्रत्यक्षानुमानयोश्च। प्रस्थानं प्रमेयपरिज्ञापनपरिपाटीयैस्तथोक्तैः। मायावादिभिः अनिर्वचनीयभावरूपाज्ञानवादिभिः शाङ्करैः कर्तृभिः। औपनिषदीकर्तुम्—उपनिषत्प्रतिपाद्यं कर्तुम्। च्विप्रत्ययेन उपनिषदामतत्परत्वं सूच्यते। आकृष्यते उपनिषदिति शेषः। प्रपञ्चसत्यत्वप्रवणानाम् अत एवानिच्छन्तीनां तपस्विनीनाम् उपनिषदां चाकृष्य जगन्मिथ्यात्वात्मकमहाकूपपातनं चिकीर्ष्यत इत्यर्थः। जगदपलापे तुल्येऽपि श्रुतिद्रोहो मायावादिनां योगाचारेभ्यो विशेष इति हृदयम्। तथा च सौत्रं सोपाधिकत्वं मायावादिपक्षेऽप्यविशिष्टमिति भावः। "तत्रेदमाचक्ष्महे" इत्यादिनोक्तं मिथ्यात्वानुमानदूषणं निगमयति—अपहस्तयन्तीत्यादिना। प्रमाणानि—प्रत्यक्षानुमानागमरूपाणि। न्यायैः सह—स्वपरिकरभूतैः अनुकूलतर्कैर्मीमांसाशास्त्रग्रथितोपक्रमादिन्यायैश्च साकम्। तत् प्रपञ्चमिथ्यात्वानुमानं, कर्म। अपहस्तयन्ति—हस्तापकर्षणेन प्रामाणिकसदसो निवर्तयन्तीत्यर्थः॥

यद्वा तदिति प्रथमान्तम्। तन्मिथ्यात्वानुमानम् औपनिषदीकर्तुम् उपनिषदनुग्राहकतर्करूपं कर्तुम्। आकृष्यते—अनिच्छदपि बलादानीयते। तत्—आकृष्यमाणं मिथ्यात्वानुमानं, कर्म। प्रमाणानि न्यायैः सहापहस्तयन्ति हस्ताकर्षेण निवर्तयन्ति इत्यर्थः। अत्र चोपनिषदित्यस्य नाध्याहारः। पूर्वयोजनायां हि; निकृष्टस्योत्कृष्टपदप्रापणं नाकर्षणं भवितुमर्हति। निकृष्टस्य हि उत्कृष्टपदप्रेप्सया स्वत एव प्रवृत्तेः कर्षणानपेक्षणात्। अतो निकृष्टं पदं मनसापि चिन्तयितुमनिच्छन्त्याः परमोत्कृष्टाया उपनिषद एव तत्राकर्षणमुचितम्। कस्मिन्नर्थे पातयाम इति तत्प्रसिद्धेः इत्यतोऽध्याहार आश्रितः। अस्यां योजनायां तु यथा ब्राह्मणब्रुवैः कैश्चिदाग्रहनिगृहीतैश्चण्डालजातीयैः कश्चित् स्वानर्हतानुसन्धानेन स्वयमनिच्छन्नपि ब्राह्मणकुलमारोपयितुमाकृष्यते तं च ब्राह्मणोत्तमा स्वानुयायिभिः क्षत्रियादिभिः सह दूरादेव निरस्यन्ते; तद्वत् मृषावादिभिर्योगाचारोक्तं मिथ्यात्वानुमानम् अर्थस्वाभाव्यात् स्वयमेव शिथिलम् औपनिषदीकर्तुमाकृष्यते। तच्च प्रमाणानि न्यायैः सहापहस्तयन्तीत्याकर्षणोक्त्युपपत्तेर्नाध्याहारः। हिशब्दश्चार्थे वर्तते। पूर्वयोजनायां तु प्रसिद्धौ हिशब्दः। (कर्तृकरणाद्धात्वर्थ इति णिनिच्)॥ (55)

* * * *

[अव०] ननु चिदंशे योगाचारैर्नानात्वक्षणिकत्वयोरुपगमान्मृषावादिभिश्च तत्र नित्यत्वैकत्वयोरुपगमात् कथं 'चिन्मात्रव्यतिरेकि वस्तु सकलं मिथ्या' इत्यादिकमुक्तं इत्याशङ्क्य चिद्व्यतिरिक्तत्वाविशेषाच्चिद्धर्मभूतनानात्वादेरपि मिथ्यात्वं मतद्वयेऽप्यविशिष्टमिति 'चिन्मात्रव्यतिरेकि वस्तु सकलं मिथ्या' इत्यादिकं वक्तुं युक्तमेवेति परिहरति—[नानात्वेत्यादि]

[मू०] नानात्वक्षणिकत्वयोरुपगतेरेकत्वनित्यत्वयो-
रप्येकत्र मते परत्र च धियो वैषम्यमस्तीति चेत्।
मायावादिमतस्य सौगतमतादेतन्न यत्तात्त्विको
धर्मस्तत्र मतद्वयेऽपि न धियः कश्चित् स्वरूपादृते॥ (56)

[व्या०] प्रसङ्गाच्चिदंशेऽपि स्वरूपातिरिक्तधर्मानभ्युपगमान्मृषावादिनां योगाचारैरत्यन्तसाम्यमिति तेषां वैदिकबहिर्भावमाह—नानात्वेत्यादिना। एकत्र मते—

योगाचारपक्षे । धियः—संविदः । नानात्वक्षणिकत्वयोरुपगतेः—बहुत्वद्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वयोः स्वीकारात् । परत्र मते मृषावादिपक्षे । धिय एकत्वनित्यत्वयोरुपगतेः—सजातीयद्वितीयशून्यत्वसर्वकालावच्छिन्नत्वयोश्च स्वीकाराद्धेतोः । सौगतमतात् सुगतभक्तयोगाचारपक्षात् । मायावादिपक्षस्य असत्याविद्यावादिपक्षस्य । वैषम्यं भेदः । अस्तीति चेदेतन्न—उक्त वैषम्यं न प्रामाणिकमित्यर्थः । कुत इत्यत्राह—यदित्यादि । यत्—यस्मात् । तत्र मतद्वयेऽपि पूर्वोक्तयोगाचारपक्षमायावादिपक्षरूपमतद्वयेऽपि । [ धियः ] स्वरूपादृते—धर्मिस्वरूपादन्यः । कश्चित् एकोऽपि । धर्मः—नानात्वादिकः एकत्वादिकश्च । तात्त्विको न भवति सत्यो न भवति । ज्ञानव्यतिरिक्तत्वाद्धर्माणां, धियश्च स्वगतभेदशून्यत्वादित्यर्थः । अतश्चिन्मात्रव्यतिरेकीत्याद्युक्तिर्नानुपपन्ना । चिदंशेऽप्यभ्युपगमतौल्यात् योगाचारमायावादिनामत्यन्तवैदिकबहिर्भाव इत्यर्थः । अत्र च योगाचारैर्मृषावादिभिश्चान्योन्यं प्रति साध्यस्य नानात्वैकत्वादेर्धर्मिस्वरूपातिरेकानतिरेकविकल्पे प्रथमे शिरसि बाह्यार्थास्तित्वसविशेषत्वयोः, अन्त्ये तु [द्वितीये] अर्थान्तरस्य च प्रसङ्गादनुमानास्वारस्यमिति सूच्यते ॥ (56)

* * * * *

[ अव० ] 'धर्मिग्राहकमानधिक्कृतम्' इत्यनेन प्रत्यक्षप्रमाणस्वारस्यहानिः, 'चिन्मात्रव्यतिरेकि' इत्यादिनानुमानस्वारस्यहानिश्चोक्ता । अत्र मुखान्तरेण प्रत्यक्षस्वारस्यहानिरुच्यते । सत्ययोरेवाधिष्ठानदोषयोर्भ्रमहेतुत्वं दृष्टम् । अतो दोषमिथ्यात्वेऽपि भ्रमोत्पत्तिः प्रत्यक्षविरुद्धा । तथा सत्यधिष्ठानमिथ्यात्वेऽपि भ्रमोत्पत्तिप्रसङ्गेन माध्यमिकपक्षविजयप्रसङ्गः । दोषकल्पकदोषापेक्षणाच्चानवस्थाप्रसङ्गः । स्वरूपानादित्वादिनानवस्थापरिहारस्तु अपरमार्थाधिष्ठानवादेऽपि तुल्य इति प्रत्यक्षस्वारस्यहान्या सह मृषावादिनां वैदिकबहिर्भावकाष्ठामाह—[स्वरूपेत्यादि]

[ मू० ] स्वरूपानादित्वस्वपरघटने दुर्घटनता
प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः ।
असत्याविद्याया गदितुमनवस्थापरिहृतौ
मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ ॥ (57)

[ व्या० ] अत्र मृषावादिनामित्यपेक्ष्यते । असत्याविद्यायाः--असत्या च सा अविद्या च असत्याविद्या, तस्याः । पारमार्थ्ये ह्यद्वैतहानिप्रसङ्गेनासत्यत्वेन स्वीकृताया भावरूपाज्ञानशब्दिताया जीवब्रह्माश्रयाया अविद्यायाः, (जीवब्रह्मया सा ) अविद्याया) अनवस्थापरिहृतौ-स्वयमपि कल्पितत्वेन मूलदोषापेक्षणात् या अनवस्था प्रसंजिता तस्याः परिहाराय । चतस्रो गतयो गदितुं मृषावादिनां मता हीति संबन्धः । स्वरूपानादित्वं च स्वपरघटना च स्वरूपानादित्वस्वपरघटने । इतरेतरयोगद्वन्द्वः । स्वरूपेणानादित्वं स्वरूपानादित्वं, प्रागभावाप्रतियोगित्वमित्यर्थः । जन्यत्वे हि जनकापेक्षा, अजन्यस्य तु न मूलापेक्षेति इयमेका गतिः । इयं च ब्रह्माज्ञानवादिना उक्ता । तदुक्तं भट्टसुदर्शनपादैः—“ब्रह्माज्ञानवादिना स्वरूपानादित्वेन परिहृतः” इति । स्वपरयोर्घटना—स्वपरघटना—स्वकल्पने प्रपञ्चकल्पने च स्वयमेव दोष इति दोषत्वेन स्वपरनिर्वाहकत्वम् । स्वानिर्वाहकत्वेन परनिर्वाहकमात्रत्वे हि स्वस्मिन् निर्वाहकान्तरापेक्षा, स्वपरनिर्वाहकत्वे तु न तदपेक्षेति इयमन्या गतिः । तदुक्तं—“दोषस्य स्वपरनिर्वाहकत्वेन दोषान्तरनैरपेक्ष्याच्च नानवस्था” इति । दुर्घटनता—दुर्घटत्वम् । उपपत्तिनिरपेक्षत्वम् । उपपत्तिसापेक्षत्वे ह्युपपादकापेक्षा । तन्निरपेक्षत्वे तु नोपपादकापेक्षेति इयमपरा गतिः । तदुक्तं—“परमार्थस्य ह्युपपत्त्यपेक्षा । प्रासादादिनिगरणेषु अल्पास्येन विपुलतरप्रासादादिनिगरणमनुपपन्नमिति युक्तिर्न प्रवर्तते । अत उपपत्तिनिरपेक्षत्वमपारमार्थ्यस्य साधकमिति । प्रवाहतोऽनादित्वं प्रवाहानादित्वम्—उत्पत्तिविनाशयोगिसजातीयव्यक्तिपारम्पर्यम् । तच्च स्वाश्रयपूर्वकालत्वव्यापकाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमिति तात्पर्यदीपिकाकृतः । बीजाङ्कुरन्यायान्नानवस्थेति इयमितरा गतिः । इयं च जीवाज्ञानवादिनोक्ता । तदुक्तं भट्टसुदर्शनपादैः“ जीवाज्ञानवादिना बीजाङ्कुरन्यायात् प्रवाहानादित्वेन परिहृता ” इति । अत्राद्या ब्रह्माज्ञानवादिनोक्ता । अन्त्या तु जीवाज्ञानवादिनोक्ता । मध्यमे तूभाभ्यामुक्ते इति विवेकः । इति चतस्रो गतयः—युक्तयः असत्याविद्याया अनवस्थापरिहाररूपसाध्ये मृषावादिभिर्गदितुं वक्तुं मता इष्टा हीत्यर्थः ।

इच्छार्थेन योगात्तुमुन् । एताश्चतस्रो गतयो अविद्यायाः स्वरूपानादित्वस्वपरनिर्वाहकत्वोपपत्तिनिरपेक्षत्वप्रवाहानादित्वरूपा अनवस्थापरिहारहेतवः । असदधिष्ठानसरणौ—प्रपञ्चभ्रमाधिष्ठानभूतसंविन्मात्रापारमार्थ्यवादिमाध्यमिकपक्षेऽपि । तुल्याः समाना इति । स्फुटं—बालानामपि स्पष्टमित्यर्थः ॥

तदिदमुक्तं भट्टसुदर्शनपादैः—"अपारमार्थ्ये स्वरूपानादित्वमपि नानवस्थापरिहारः । तथा सति माध्यमिकपक्षविजयप्रसङ्गात् । तत्राधिष्ठानस्य भ्रान्तिसिद्धत्वेन तस्या भ्रान्तेरधिष्ठानान्तरापेक्षा स्यात्तस्यापि भ्रान्तिसिद्धत्वेन तथा स्यादित्यनवस्थया-ह्यधिष्ठानस्य पारमार्थ्यं साधितम् । माध्यमिकेनापरमार्थाधिष्ठानस्य स्वरूपानादित्वे स्वीकृतेऽनवस्था परिहृतेति अधिष्ठानापारमार्थ्यमेव स्यात्" इति । "दोषस्य स्वपरनिर्वाहकत्वेऽधिष्ठानमपि तथा स्यात्" इति च । "दुर्घटत्वमनवस्थापरिहारश्चेदधिष्ठानापारमार्थ्येऽपि अनवस्था परिहृता स्यात्" इति च । "प्रवाहानादित्वपक्षेऽप्यधिष्ठानापारमार्थ्येऽनवस्था सुपरिहरा । पित्रादिपरम्परावत् अधिष्ठानपरम्परानादित्वाभ्युपगमात्" इति च । तुशब्दस्तु स्वपरनिर्वाहकत्वदुर्घटत्वयोरधिष्ठानस्य दोषवैषम्यशङ्काव्युदासकः । तदाहुः भट्टसुदर्शनपादाः—"परं प्रत्यधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वमिति चेत्परं प्रति दोषत्वे हि स्वनिर्वाहकत्वं, तदेव नास्ति" इति । 'तुल्याः' इत्यादिना तत्रापरमार्थत्वप्रयुक्तोपपत्तिरवर्जनीयेत्यधिष्ठानापेक्षा स्यादेवेत्यनवस्थितिरिति वक्तव्यम् । तत्र दोषेऽपि तुल्यमिति च, तदिदं सर्वमभिप्रेत्य भाषितं भगवता—"यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमो न तावद्भ्रान्तिरुपपादिता भवति" इति ॥ (57)

* * * *

[ अव० ] सर्वशून्यत्वसाधकहेतोरिव चिन्मात्रव्यतिरिक्तापारमार्थ्यसाधकहेतोरपि स्वस्वरूपोत्सादकतया हेतोः स्वरूपासिद्धिरिति पुनरप्यनुमानास्वारस्यमुच्यते । तत्र मृषावादिपक्षसाधकयुक्तीनां माध्यमिकपक्षसाधकत्वं पूर्वत्रोक्तम् । अत्र तु माध्यमिकपक्षनिरासकयुक्तीनां मृषावादिपक्षनिरासकत्वमुच्यते—[ रे रे इत्यादि ]

[ मू० ] रे रे खण्डनकार खण्डय भवत्पक्षः प्रतिक्षिप्यते
तर्कैस्त्वत्कथितैस्ततः किमिति चेदसन्मतं तिष्ठति ।
यद्वन्माध्यमिकोक्तचिन्मुदसनप्रत्यासतस्त्वन्मतं
तिष्ठत्येव यथा च बाधकहतौ लोके स्वरूपस्थितिः ॥ (58)

[व्या०] रे इति सावज्ञाह्वानम् । द्विरुक्त्या निकर्षातिशयो व्यज्यते । खण्डनकार— खण्डनाख्यग्रन्थकर्तः । खण्डय । अभ्यनुज्ञायां लोट् । न नः किंचिच्छिन्नमित्यर्थः । कुत इत्यत्राह—भवदित्यादि । त्वत्कथितैस्तर्कैः—प्रमाणव्याप्त्यादिभङ्गावसरे माध्यमिकं प्रति त्वदुक्तैस्तर्कैः । भवत्पक्षः त्वत्स्वीकृतं चिद्व्यतिरिक्तस्य मिथ्यात्वम् । प्रतिक्षिप्यते— निरस्यते । साधनधर्मपारमार्थ्यापारमार्थ्यविकल्पादिभिस्त्वदुक्तमनुमानादिकं निरस्यत इत्यर्थः । ततः किमिति चेदिति । स्वमतखण्डनाभ्यनुज्ञानेन स्वपक्षस्थापनाविरहितात् परपक्षदूषणाद्भवतां वैतण्डिकत्वमेव प्रसजति । न तु प्रयोजनं सिध्यतीति चेदित्यर्थः । परिहरति— अस्मन्मतमित्यादिना । अस्मन्मतम् अस्मदभिमतं जगत्सत्यत्वम् । तिष्ठति— स्थिरं भवति । परपक्षदूषणं स्वपक्षस्थापना चेतीदं द्वयमपि तन्त्रेण सिद्धमिति न वैतण्डिकत्वप्रसङ्ग इति भावः । अस्मिन्नर्थे तत्पक्षमेव दृष्टान्तयन्ति— यद्वेत्यादिना । (यथा) [यद्वत्] माध्यमिकोक्तस्य शून्यवादिनोक्तस्य, चिद्व्युदसनस्य—अधिष्ठानमिथ्यात्वस्य, प्रत्यासतः प्रतिक्षेपात् । प्रमितितत्साधनसद्भावादिविकल्पमुखेन त्वत्कृतात् । त्वन्मतं त्वदभिमतमधिष्ठानभूतसंवित्सत्यत्वम् । तिष्ठति; तद्वदित्यर्थः । दृष्टान्तान्तरमाह—यथा चेति । लोके अपवरकादौ । बाधकस्य घटाभावबोधकवाक्यस्य । हतौ तत्रैव घटसद्भावप्रमितिजनकेन वाक्येन स्वबोध्याभावबोधने सति । स्वरूपस्य प्रतियोगिनो घटादेः । स्थितिः सत्यत्वं यथा तद्वदित्यर्थः । कारकज्ञापकयोर्वैषम्यात् "न हि देवदत्तहन्तरि हते देवत्तस्य पुनरुन्मज्जनम्" इति न्यायस्य न विरोधः । तदिदं भट्टसुदर्शनपादैः, एतत्खण्डनकाराद्युक्तकुतर्कनिरसनोपलक्षणार्थमुक्तमित्यादिना विस्तरेणोक्तं तत्रैवानुसन्धेयम् ॥ (58)

*　　*　　*　　*

[अव०] पुनरप्यनुमानास्वारस्यमाह—[अधीत्वमित्यादि]

[मू०] अधीत्वं वेद्यत्वे प्रसजति धियः कुम्भवदिति
　　स्वसिद्धिः सा धीत्वादिति यदिह कोऽप्याह तदसत् ।
स्वसिद्धिः स्वाधारं प्रति हि न परं प्रत्यपि नरं
　　परज्ञेया सेयं तदपि न मतित्वं विघटते ॥ (59)

[व्या०] कोऽपि—नामग्रहणानर्हः कश्चिन्मृषावादीत्यर्थः। इह—प्रामाणिकभूयिष्ठे जगति। धियः—अनुभूतेः। वेद्यत्वे—अनुभवान्तरविषयत्वे सति। अधीत्वं अननुभूतित्वम्। प्रसजति आपादनं भजति। कुम्भवत्—कुम्भस्येव। षष्ठ्यन्ताद्वतिः। अनुभूतिर्यद्यनुभाव्या स्यात्तर्हि अननुभूतिः स्यात् घटवदित्ययमनुकूलतर्को वक्ष्यमाणानुमानाङ्गतयोक्त इति हेतोः, उक्ततर्काद्धेतोः। अथानुमानमाह—स्वसिद्धिरित्यादिना। सा—अनुभूतिः। अयं पक्षनिर्देशः। स्वसिद्धिः—स्वेनैव सिद्धिः व्यवहारानुगुण्यं यस्यास्तथोक्ता। [तत्त्वं च] स्वयंप्रकाशत्वे सति [ज्ञानान्तराविषयत्वं], (ज्ञानान्तरविषयत्वं भावतीत्यर्थः) अवधारणगर्भत्वादुक्तार्थसिद्धिः, तच्च वेद्यत्वे परज्ञेयेति च पूर्वपरानुसारादाश्रितम्। अयं च साध्यनिर्देशः। धीत्वात् अनुभूतित्वात्। हेतुनिर्देशोऽयम्। कुम्भवदिति पूर्वस्मादनुषज्यते। व्यतिरेकदृष्टान्तश्चायम्। घटादौ हि ज्ञानान्तरविषयत्वाभावस्वप्रकाशत्वयोरभावोऽननुभूतित्वं च दृष्टमितीदं व्यतिरेक्यनुमानम्। इति यदाह पूर्वोक्ताकारकं यदनुमानमुक्तवान्, वक्ति वा। तदसत्। तत्—अनुमानम् असत्—दुष्टं, सिद्धसाधनकालात्ययापदेशसोपाधिकत्वरूपदोषयुक्तमित्यर्थः। अत्र च साध्यं स्वयंप्रकाशत्वं किं स्वाश्रयं प्रति, उतान्यं प्रति। आद्ये सिद्धसाधनं, अन्त्ये बाधः। परज्ञानस्य परं प्रति ज्ञानमन्तरेणाप्रकाशात्। अनुभूतेर्ज्ञानान्तरविषयत्वाभावश्च बाधितः। पुरुषान्तरज्ञानानां पुरुषान्तरीयानुमित्यादिविषयत्वात्। अन्यथा लौकिकवैदिकसकलव्यवहारविरोधापत्तेः। घटादेश्चाननुभूतित्वमज्ञानाविरोधित्वप्रयुक्तं नानुभाव्यत्वप्रयुक्तमिति सोपाधिकं चेदम्। तदेतदाह—स्वसिद्धिरित्यादिना। स्वाधारं प्रति—अहं जानामीत्यत्र ज्ञानाश्रयतया प्रतीतमहमर्थं प्रति। स्वसिद्धिः—स्वयंप्रकाशस्वाश्रयभूताहमर्थकर्तृकस्वकर्मकव्यवहारे स्वयमेव हेतुरित्यर्थः। शेषित्ववाचिना प्रतिशब्देनाश्रयकर्तृकत्वलाभः। शेषत्ववाचिता च लक्षणेत्थं भूताख्यान भागवीप्सासु प्रतिपर्यनवः' इत्युक्तेः। अत एव 'स्वाधारम्' इत्यत्र द्वितीया। साध्यतावच्छेदकप्रकारेण मानान्तरसिद्धिपरहिशब्देन सिद्धसाधनत्वं सूच्यते। न परमित्यादि; परं नरं प्रत्यपि स्वाश्रयपुरुषादन्यं पुरुषं प्रत्यपि (पुरुषान्तरं प्रत्यपि)। स्वसिद्धिर्न भवति हीत्यर्थः। हिशब्दो मध्यमणिन्यायात् पूर्वापरान्वयी। अतः कालात्ययापदिष्टमिदमित्यर्थः। परज्ञेयेत्यादि; सेयं—स्वाश्रयं प्रति स्वसिद्धिरूपा पुरुषान्तरं प्रत्यतथाविधा च धीः। परज्ञेया—परया—स्वभिन्नानुभूत्या, ज्ञानान्तरे-

णेत्यर्थः । ज्ञेया विषयीकार्या, ज्ञानान्तरविषयत्ववतीत्यर्थः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' । परा चानुभूतिद्वयी समानाधिकरणा व्यधिकरणा च । तया द्विविधयापि वेद्यत्वमनुभूतेः । तत्र तत्पुरुषीयातीतानागतानुभूतेस्तत्पुरुषीयवर्तमानानुभूतिविषयत्वादाद्ययानुभाव्यत्वं, पुरुषान्तरज्ञानानां पुरुषान्तरानुमेयत्वदर्शनादन्ययानुभूत्यानुभाव्यत्वमिति समानाधिकरणव्यधिकरणानुभूतिद्वयसंग्रहाय परया ज्ञेयेति व्याख्यातम् । अतोऽनुभूतेर्ज्ञानान्तरविषयत्वाभावो बाधित इत्यर्थः । तदपीत्यादि ; अत्र धिय इत्यनुषज्यते । तदपि—तथापि, परज्ञेयत्वेऽपि, ज्ञानान्तरविषयत्वे सत्यपीति यावत् । धियः—अनुभूतेः मतित्वं, न विघटते—न विरुध्यते । अनुभूतित्वमनुभाव्यत्वाधिकरणानुभूतिवृत्त्यभावाप्रतियोगीत्यर्थः । घटादेरनुभूतित्वाभावो नानुभाव्यत्वप्रयुक्तः । किं तु अज्ञानाविरोधित्वप्रयुक्तः । अनुभूतिस्तु अज्ञानविरोधिन्येवेति सोपाधिकत्वमिति भावः ॥ (59)

* * * * *

[ अव० ] अनुभूतेरनुभूतित्वमसाधारणधर्मः । अनुभूतित्वं च वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम् । अनुभाव्यत्वं तु घटादिसाधारणं, न ह्यसाधारणाकारो धर्मिग्राहकमानसिद्धः साधारणाकारे सत्यपगच्छति । तथा सति [ घटादेरनुभाव्यत्वेनाघटत्वादिप्रसङ्गादिति, अनुभाव्यत्वाननुभूतित्वयोः ] ( घटादेरनुभाव्यत्वेन घटत्वादिप्रसङ्गादित्यनुभाव्यत्वाननुभाव्यत्वयोः ) व्याप्तिं दूषयति— [ तथा हीत्यादि ]

[ मू० ] तथा हि प्रत्यक्षप्रभृतिमितिवर्गप्रकटितः
स्वभावो भावानामपसरति वेद्यास्त इति किम् ।
स्वभावप्रत्यासो यदि भवति वेद्यत्ववशतः
पटस्य ज्ञेयत्वे घटवदपटत्वं प्रसजति ॥ (60)

[ व्या० ] तथा हि—"तदपि न मतित्वं विघटते" इति यत्पूर्वमुक्तं तत्तथैवेत्यर्थः । कुत इत्यत्राह—प्रत्यक्षेत्यादि । ते—भावाः, पदार्थाः । वेद्या इति—ज्ञानविषया इति । इतिशब्दो हेत्वर्थकः । वेद्यत्वात्कारणादित्यर्थः । भावानां—पदार्थानाम् । प्रत्यक्षप्रभृतिमितिवर्गैः—साक्षात्कारानुमितिशाब्दात्मकप्रमासमूहैः ।

**प्रकटितः**—पूर्वं सन्नेव प्रकाशितः। तेन वैज्ञानिकत्वव्युदासः। वर्गशब्देन बहूनामन्यथाकरणमनुचितमिति लभ्यते। **स्वभावः**—असाधारणधर्मः। **अपसरति किं** नापगच्छतीत्यर्थः। पदार्थानां प्रमेयत्वादिरूपसाधारण-धर्मो न प्रमाणसिद्धः तत्तदसाधारणधर्मविरुद्ध इत्यर्थः। तथात्वेऽति-प्रसङ्गमाह—**स्वभावेत्यादिना**। धिय इत्यादिः। **धियो वेद्यत्ववशतः**—अनुभाव्यत्वयोगात्, ज्ञेयत्वरूपसाधारणधर्मयोगादित्यर्थः। **स्वभावस्य**—स्वासाधारणधर्मभूतानुभूतित्वस्य, **प्रत्यासः**—प्रतिक्षेपः। 'असु क्षेपणे' इति पठितात् प्रतिपूर्वात् भावे घञ्। **भवति यदि**—भवति चेदित्यर्थः। ज्ञेयत्वरूपसाधारणधर्मोऽनुभूतित्वरूपासाधारणधर्माभावव्याप्यश्चेदित्यर्थः। **पटस्य** प्रत्यक्षसिद्धपटत्वरूपासाधारणधर्मवतः। **ज्ञेयत्वे सति**—साधारणात् प्रमेयत्वा-दित्यर्थः। **घटवत्**—प्रमेयत्वधर्मयोगिघटवत्। **अपटत्वं** पटत्वाभावः। अर्थाभावेऽव्ययीभावः। **प्रसजति**—आपद्यते। ज्ञेयत्वस्य घटे पटत्वाभाव-सामानाधिकरण्यमात्रेण पटेऽपि तत्सामानाधिकरण्यं प्रत्यक्षविरुद्धमित्यर्थः। इदमुपलक्षणं—धूमानुमितस्य पर्वतीयवह्नेर्ज्ञेयत्वात् पर्वतीयवह्नित्वाभावप्रसङ्गः। कल्प्यापूर्वस्य वादे तस्य ज्ञेयत्वादपूर्वत्वाभावप्रसङ्गः। शब्दैकवेद्यस्य स्वर्गस्य प्रमेय-त्वात् स्वर्गत्वाभावप्रसङ्गश्चेत्यपि बोध्यम्। प्रत्यक्षप्रभृतिमितिवर्गेत्युक्तत्वात्। एवं च घटादावनुभाव्यत्वस्यानुभूतित्वाभावसामानाधिकरण्यमात्रेण स्वप्रकाशायामनु-भूतावपि अनुभाव्यत्वेनानुभूतित्वाभावः प्रत्यक्षबाधित इति भावः। घटादौ त्वज्ञानाविरोधित्वमेवानुभूतित्वाभावप्रयोजकं, नानुभाव्यत्वम्। तदिदं भाषितं भगवता "एवं तर्ह्यज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनं, नानुभाव्यत्वमित्या-स्थीयताम्" इति। अतोऽनुभाव्यत्वाननुभूतित्वयोर्न व्याप्तिरिति हृदयम्॥ (60)

* * * *

[अव०] "प्रत्यक्षादिप्रमाणस्वरसगतिहतिः" इत्यत्रादिशब्दविवक्षितानुमानास्वारस्य-मुक्तं "दृश्यत्वादनृतम्" इत्यादिना। अत्र ("तद्बाधश्च) ["तर्कबाधश्च] भूयान्" इत्युक्तं विवृणोति—[प्रकाश इत्यादि]

[मू०] प्रकाशः कुम्भादौ जडिमवति तद्गोचरमिति-
स्तिरोधिश्चैतस्या विरतिरजडे ब्रह्मणि पुनः ।
स्वरूपं चिन्मात्रं स्फुरणमपिधिश्च स्वनिधनं
जडं वा ब्रह्म स्यादपिधिविधुरं वाप्यपरथा ॥ (61)

[व्या०] ब्रह्मस्वरूपस्य नित्यत्वनिर्विशेषत्वस्वप्रकाशत्वानि, भावरूपाज्ञानेन तिरोधानं, ज्ञानेन तन्निवृत्तिश्च मृषावादिभिरभ्युपगतानि । तत्रान्योन्यं धर्माणां व्याहतिरुच्यते—प्रकाशः कुम्भादावित्यादिना । जडिमवति—जडत्ववति, नियतपरप्रकाश्यत्ववति । कुम्भादौ—घटादौ । प्रकाशः—'भाति' 'प्रकाशते' इति व्यवहारविषयो धर्मः । तद्गोचरमितिः—तद्विषयकज्ञानं भवति । कुम्भादौ तिरोधिश्च घटादिनिष्ठं तिरोहितत्वं तु, न प्रकाशत इति व्यवहारविषयभूतं तिरोहितत्वं । एतस्याः—घटादिगोचरबुद्धेः । विरतिः—अभावो भवतीत्यर्थः । एवं प्रामाणिकं घटादीनां प्रकाशतिरोधानस्वरूपं दर्शितम् । अत्र च घटादिस्वरूपातिरिक्तत्वात्तदभावरूपं तत्तिरोधानं न तत्स्वरूपनाशात्मकमिति वक्ष्यमाणार्थवैषम्यमुक्तं भवति । अस्त्वेवं ततः किमित्यत्राह—अजड इत्यादि । अजडे—स्वप्रकाशे । ब्रह्मणि पुनः—ब्रह्मणि विषये तु । चिदेव चिन्मात्रं—स्वरूपातिरिक्तप्रकाशादिधर्मशून्यम् । स्वरूपं—धर्मिस्वरूपम् । स्फुरणं—प्रकाशः, भवतीति शेषः । अपिधिश्च अपिधानं च, तिरोधानं त्वित्यर्थः । अपिपूर्वकाद्धधातेः उपसर्गे घोः किप्रत्ययः । स्वनिधनं—स्वरूपनाश एव, अत्र स्यादिति शेषः । प्रकाशस्य स्वरूपरूपत्वात्तिरोधानं तन्नाश एव स्यादिति नित्यत्वादीनां मिथो व्याघात इति भावः । "प्रकाशैकस्वरूपस्य प्रकाशतिरोधानं प्रकाशनाश एव" इति च भगवता भाषितम् । जडं वेत्यादि । अपरथा—ब्रह्मणःस्वरूपातिरिक्तज्ञानविषयत्वाभ्युपगमे ; स्वरूपातिरिक्तप्रकाशस्य नित्यस्फुरणाभ्युपगमे च, क्रमेण ब्रह्म जडं वा स्यात् ; अपिधिविधुरं वा स्यात्—घटादिवत् जडत्वप्रसङ्गो वा, तिरोधानाभावप्रसङ्गो वा ब्रह्मण इति भावः । तिरोधानस्य निवर्तकानुपपत्तिनिवृत्त्यनुपपत्त्योः, अपिशब्देन सूचनम् । अत्र च "ज्ञानरूपं परं ब्रह्म" इत्यादिकमनुसन्धेयम् । तिरश्शब्दस्यानुपसर्गत्वेऽपि 'बाहुळकः किप्रत्यय' इति वा, 'सर्वधातुभ्य इन्' इति इन्प्रत्ययस्य बाहुळकं कित्त्वमिति वा धातुनिर्देशे

इक्प्रत्ययः । दधातेश्चार्थलक्षकत्वमिति वा समाधेयम् । तिरोधिपदसाधुत्वमित्याहुः । प्रयुक्तं च भगवद्यामुनपादैः—“स्वयाथात्म्यं प्रकृत्यास्य तिरोधिः शरणागतिः” इति ॥ (61)

* * * *

[अव०] आच्छादनं विक्षेपश्चेति कृत्यद्वयमविद्याया ब्रह्मणि मृषावादिभिरुक्तम् । तत्राच्छादनांशः पूर्वत्र दूषितः । विक्षेपांशोऽत्र दूष्यते । विक्षेपाश्चाध्यासः । स चातद्रूपारोपः । तस्यात्र स्वरूपनिवृत्त्योरसिद्धिरुच्यते—पुरोवर्तीत्यादि]

[मू०] पुरोवर्तिद्रव्यस्फुरणमपि रूप्यभ्रमसहं
न शुक्तित्वस्फूर्तिर्भ्रमविहतये या प्रभवति ।
यदि ब्रह्म प्राग्वन्न खलु जगदध्यासविरतिः
क्व सिध्येदध्यासो यदि भवति शुक्तित्वसदृशम् ॥ (62)

[व्या०] पुरो वर्तत इति पुरोवर्ति । ‘सुप्यजातौ’ इति णिनिः । पुरोवर्तिनः द्रव्यस्य शुक्त्यादिद्रव्यस्य, स्फुरणं इदंत्व[द्रव्यत्व] (शुक्तित्व)ादिना ग्रहणम् । रूप्यभ्रमसहं—रजतभ्रमाविरोधि । प्रत्युत तदुपयोगीत्यर्थः । अपिशब्दस्तु स्फुरणभ्रमयोः समानविशेष्यकत्वप्रयुक्तविरोधसूचकः । स च विरोधस्फुरणस्यासाधारणधर्मविषयकत्वेन परिहृतः । न शुक्तित्वेत्यादि । शुक्तित्वस्फूर्तिः—शुक्त्यसाधारणशुक्तित्वस्फुरणम् । न रूप्यभ्रमसहं—रजतभ्रमविरोधीत्यर्थः । कुत इत्यत्राह—भ्रमेति । या—शुक्तित्वस्फूर्तिः । भ्रमविहतये—रजतभ्रमनिवृत्तये, अनुत्पादाय प्रभवति—शक्तेत्यर्थः । तथा च साधारणाकारग्रहो भ्रमोत्पादकः, असाधारणाकारग्रहस्तु तद्विरोधीति सर्वसिद्धमित्यर्थः । तयोर्द्वयोरपि ब्रह्मविषयकत्वेऽनिष्टमाह—यदीत्यादिना । ब्रह्म—स्वप्रकाशैकरसं ब्रह्म । प्राग्वद्यदि—पूर्वार्धे प्रथमोपात्तपुरोवर्तिद्रव्यस्फुरणसदृशं चेद्भ्रमहेतुधर्मिग्रहरूपं चेत् । तदा जगदध्यासविरतिः न खलु प्रपञ्चभ्रमनिवृत्तिर्न स्यात् । भ्रमहेतुज्ञानस्य तदनिवर्तकत्वादित्यर्थः । तथा चानिर्मोक्षप्रसङ्ग इति भावः । ब्रह्म शुक्तित्वसदृशं यदि भवति—असाधारणधर्मभूतशुक्तित्वग्रहतुल्यं चेत्, भ्रमविरोधिग्रहरूपं चेत् । अध्यासः—प्रपञ्चभ्रमः क्व सिध्येत्

प्रतिबन्धकसत्त्वान्नोत्पद्येतेत्यर्थः । तथा च प्रत्यक्षविरोध इत्यर्थः । ब्रह्मस्वरूपं न स्वरूपतोऽध्यासविरोधि, किं त्वपरोक्षवृत्त्यवच्छिन्नमित्येतत्तु न संभवति । विषयभेदाभावात् । ब्रह्मस्वरूपाविषयीकृतापरोक्षवृत्त्यवच्छिन्नतद्विषयीकृतः कश्चिदाकारोऽस्ति वा न वा ? आद्ये ब्रह्मणः सविशेषत्वम्, अन्त्ये स्वरूपस्यैव निवर्तकत्वमित्यादिकं तु वेदान्तविजयादिषु द्रष्टव्यम् ॥ (62)

* * * *

[ अव० ] ब्रह्मणि अचेतनाध्यासः चेतनाध्यासश्चेति अध्यासद्वयं तन्मते स्वीकृतम् । तत्र घटपटाध्यासोऽचेतनाध्यासः । कर्तृत्वभोक्तृत्वादियुक्तपुरुषाध्यासस्तु चेतनाध्यासः । तत्राचिदध्यासः " न खलु जगदध्यासविरतिः " इति पूर्वत्र दूषितः । अत्र तु कर्तृत्वभोक्तृत्वादियुक्तजीवाध्यासानुपपत्तिस्तन्निवृत्त्यनुपपत्तिश्चोच्यते—[ इदमित्यादि ]

[ मू० ] इदं मायावादे विविधमुदितं दूषणमिह
स्वयंज्योतिर्ब्रह्म व्यपगतविशेषं यदि कथम् ।
मते तस्मिन्नसद्दृशि तु सविशेषः पुरुष इ-
त्यतद्रूपारोपस्तदुपरतिरित्यादि घटते ॥ (63)

[ व्या० ] इह मते—मायावादपक्षे ब्रह्म, स्वयंज्योतिः व्यपगतविशेषं यदि— निर्विशेषस्वप्रकाशरूपं चेत् । तदा असद्दृशि तस्मिन्—असत्प्रत्यये निर्विशेषस्वप्रकाशस्वरूपे ब्रह्मणि । " अस्मत्प्रत्ययगोचरे विषयिणि " इति हि तदुक्तिः । तुशब्दोऽधिष्ठानत्वोपयुक्तधर्मशून्यत्वद्योतकः । सविशेषः— ; विषयतया कर्तृत्वभोक्तृत्वादिधर्मयुक्तः । पुरुष इत्यतद्रूपारोपः—पुरुष इति यदतद्रूपं पुरुषत्वरूपं यदधिष्ठानभूतब्रह्मस्वरूपावृत्तिरूपधर्मः तस्यारोपोऽध्यासः । तदुपरतिः— तन्निवृत्तिः । इत्यादि— तत्प्रभृति पूर्वोक्तं सर्वम् । कथं घटते — कथमुपपद्यते ।

ब्रह्मणो निर्विशेषत्वेन साधारणासाधारणधर्मद्वयाभावात्, स्वप्रकाशैकस्वरूपत्वेन तयोः स्फूर्त्यस्फूर्त्योरभावाच्च न भ्रमसंभवः । संभवे वा न तन्निवृत्तिः ; तदविरोधिनस्तन्निवर्तकत्वायोगात् । न च वैशद्यस्याध्यासनिवर्तकत्वं युक्तम् । तस्य जडत्वेनानिवर्तकत्वात् । ज्ञानमेवाज्ञाननिवर्तकमिति युष्माभिरुपगमात् । तस्मान्नविषयक

ज्ञानस्यैव निवर्तकत्वे च तस्यानादित्वादनादिनिवृत्तिप्रसङ्गः । स्वमात्रसाक्षिज्ञानस्य च निवर्तकत्वे तस्योत्पाद्यत्वप्रसङ्गः । स्वमात्रसाक्षित्वस्य चोत्पाद्यत्वे तस्यैव निवर्तकत्वप्रसङ्गः । स्वमात्रसाक्षित्वस्य निवर्तकतावच्छेदकत्वमप्ययुक्तम् । शुक्त्यादिज्ञानस्याधिष्ठानातिरिक्तविषयस्यापि निवर्तकत्वदर्शनादिकं चण्डमारुतादावनुसन्धेयम् ॥

तस्मिन्नस्मद्दृशि त्वित्यस्यैवं वार्थः । तुशब्दश्चकारार्थकः । तस्मिन् निर्विशेषस्वप्रकाशे ब्रह्मणि । अस्मद्दृशि च अस्मत्प्रतीतिविषये अहंकाराख्यद्रव्ये च । सविशेषः—कर्तृत्वादिविषयकः । पुरुष इत्यतद्रूपारोपः जीवाध्यास इत्याद्ययं भावः । न तावदन्तःकरणे चित्प्रतिबिम्बात् कर्तृत्वादियुक्तजीवसिद्धिः । चितो निर्विशेषत्वेन तत्र कर्तृत्वाद्यभावात् नीरूपत्वेन प्रतिबिम्बासंभवाच्च । नापि चित्स्वरूपेऽन्तःकरणप्रतिबिम्बात् कर्तृत्वादिविशिष्टजीवसिद्धिः । अन्तःकरणस्याचेतनत्वेन (कर्तृ) कर्तृत्वाद्यभावात् । न च ज्ञातृत्वकर्तृत्वादिशून्यस्य ज्ञानस्यान्तःकरणे प्रतिबिम्बाज्जीवसिद्धिः । ज्ञानस्याचाक्षुषत्वेन प्रतिबिम्बासंभवादिति अतद्रूपारोपः तदुपरतिरित्यादि घटत इतीदं विविधं मायावादे दूषणमुदितम् उक्तमिति मायावाद इत्युपक्रान्तविस्तरो निगमितः ॥ (63)

*    *    *    *

[अव० ] ननु भवत्पक्षे क्षेत्रज्ञानां नित्यं स्फुरणमस्ति तथा[1] च तेषां स्वरूपतिरोधानेन विना न देहात्मभ्रम इति तुल्यानुपपत्तिरित्यत्राह—[ अधिष्ठान इत्यादि ]

[मू० ] अधिष्ठाने पुंसि स्वयमहमिति स्फूर्जति वपुः-
प्रकाराध्यारोपः पशुरहमहं मानुष इति ।
अणुत्वादौ देहव्यतिकरविदूरे च विहिते
तिरोधिः संकोचो ननु भवति तद्गोचरधियः ॥ (64)

[व्या० ] पुंसि—क्षेत्रज्ञात्मनि । अधिष्ठाने विशेष्ये, जीवात्मरूपे भ्रमधर्मिणि । अहमिति स्वयं स्फूर्जति— अहमिति स्वतःप्रकाशमाने सतीत्यर्थः । 'टुओस्फूर्जा वज्रनिर्घोषे' इति पटितात् लटः शत्रादेशः । स्वयंप्रकाशत्वप्रयुक्तात्मस्फुरणस्यात्यन्तदार्ढ्यद्योतनाय वज्रनिर्घोषत्वव्यपदेशः । एतेनात्मनो जडत्वं निरस्तम्

---

1 पि

अत्र च भ्रमापेक्षिताधिष्ठानस्फूर्तिरुक्ता । भ्रमविरोधिधर्मास्फूर्तिमाह—अणुत्वेत्यादिना । देहव्यतिकरः—देहात्मनोरितरेतरतादात्म्यभ्रमः, विदूरो निर्वर्त्यो यस्य तथोक्ते । अन्योन्यसंसर्गवाचिनो व्यतिकरशब्दस्य सामर्थ्यात् तद्भ्रमपरत्वम् । अणुत्वादीनां देहावृत्तित्वात् तज्ज्ञानं देहतादात्म्यभ्रमविरोधीति देहव्यतिकरेत्याद्युक्तम् । अणुत्वादौ । आदिना नित्यत्वनिरवयवत्वयोः परिग्रहः । विहिते सति च तिरोहिते सति च, स्फुरति सति चेत्यर्थः । चकारोऽधिष्ठानस्फुरणं पूर्वोक्तं समुच्चिनोति । अणुत्वादीनामागमगम्यत्वादस्फुरणोक्तिः । ते हि नाहं प्रत्ययगोचरा इति । एवं भ्रमापेक्षितधर्मिस्फुरणं विरोधिधर्मास्फुरणं चोक्तम् । अथ भ्रमोत्पत्तिमाह—पशुरित्यादिना । अहं पशुरहं मानुष इति वपुः—प्रकाराध्यारोपः तादात्म्येन देहप्रकारकभ्रमः । अत्र भवतीति शेषः । अभेदसंसर्गेण पशुमनुष्यादिदेहप्रकारकात्मविशेष्यकभ्रम उपपन्न इति भावः । प्रकारत्वमिहागृहीतान्तरत्वे सत्यप्रधानतया भातत्त्वम् । स्वरूपातिरिक्तधर्माभ्युपगमात् । तदप्रकारेऽपि नात्मस्वरूपनाशप्रसङ्ग इति देहात्मभ्रमोपपत्तिः । पक्षान्तरे तु तत्र स्वरूपातिरिक्तधर्मानभ्युपगमात् स्वरूपनाशप्रसङ्गादिना तदनुपपत्तिर्दुर्वारेति भावः । तद्गोचरधियः—आत्मवृत्त्यणुत्वनित्यत्वनिरवयवत्वेषु विषयतया प्रसरणार्हस्य धर्मभूतज्ञानस्य संकोचः—कर्मणा, श्रुत्यादिसहकार्यसमवधानेन च तेषु प्रसरणविरह एव । नन्वित्यवधारणे । तिरोधिः—अप्रकाशः; अत्र भवतीति शेषः । अणुत्वादेरप्रकाशोपपत्तेः, धर्मिणः प्रकाशोपपत्तेश्च आत्मनि देहतादात्म्यभ्रम उपपन्न इति हृदयम् । तदिदमाहुर्भट्टसुदर्शनपादाः—"सत्यं स्वरूपस्फुरणमस्त्येव । न तस्य तिरोधानमभ्युपगम्यते । न च स्वरूपस्फुरणं भ्रमविरोधि । किन्तु नित्यत्वाणुत्वनिरवयवत्वान्येव भ्रमविरोधीनि । तान्यागमगम्यानि । तेषां तिरोधिस्तद्विषयज्ञानप्रसराभावरूपः संकोचः । अतः स्वरूपातिरिक्ताकारान्तराभ्युपगमान्नात्मनाशप्रसङ्गः" इति ॥ (64)

* * * *

[अव०] ननु अहंत्वधर्मभूतज्ञानयोरात्मासाधारणाकारयोः स्फुरणाद्भ्रमानुपपत्तिरित्यत्राह—[अहं त्वेत्यादि]

[मू०] अहंत्वज्ञातृत्वे ननु पुरुषधर्मौ ननु वपु-
र्गुणौ वस्तुस्थित्या तदपि न तथात्वं ननु तयोः ।

अनादेरध्यासादवगतमिदानीं श्रुतिनय-
स्वयोगाद्यैरन्यः स्फुरति वपुरादेस्तु पुरुषः ॥ (65)

[ व्या० ] अहंत्वज्ञातृत्वे—प्रत्यक्त्वेनाहंबुद्धिबोध्यत्वं धर्मभूतज्ञानाश्रयत्वं चेत्येते वस्तुस्थित्या। वस्तुसत्तया। इत्थंभूतलक्षणे तृतीया। प्रकृत्यादित्वाद्वा तृतीया। व्युत्पत्तिस्वाभाव्याच्च पदार्थैकदेशेऽपि पुरुषधर्मत्वे तृतीयार्थान्वयः। पुरुषधर्मौ ननु—वस्तुसद्भावविशिष्टात्मधर्मताकावेव । "पुरुषावात्ममानवौ" इति कोशः। ( वस्तुस्थित्या पुरुषधर्मावित्यनेनाग्रहणसंभावितमस्त्वमात्मवृत्तित्वस्य व्युदस्यते)। न तु वपुर्गुणौ—न तु देहधर्मौ । नित्यतदाश्रितत्वात् गुणत्वव्यपदेशः। अत्रापि वस्तुस्थित्येति संबध्यते। वस्तुसत्तायुक्तदेहधर्मत्वाभावके इत्यर्थः। अन्तराळाग्रहणसंभावितं देहधर्मत्वं चात्र व्युदस्यते। आभ्यां वाक्याभ्याम् आत्मवृत्तित्वे सति देहावृत्तित्वरूपमात्मासाधारणाकारत्वमहंत्वज्ञातृत्वयोरुक्तं भवति। यद्यपीति चादौ पूरणीयम्। अहंत्वज्ञातृत्वे यद्यपि पुरुषधर्मावेव वपुर्गुणौ च न भवत इति योजना। असाधारणाकारस्फुरणात् भ्रमानुपपत्तिरिति चोद्यपरमिदं वाक्यम्। परिहरति—तदपीत्यादिना। [तदपि](तथापि) तयोरहंत्वज्ञातृत्वयोस्तथात्वमात्मवृत्तित्वे सति देहावृत्तित्वं, आत्मासाधारणत्वमित्यर्थः। अनादेः—बीजाङ्कुरन्यायेन प्रवाहानादित्ववतः अध्यासात् देहात्मभ्रमाद्धेतोः। नावगतम्—न गृहीतम्। अतो भ्रमोपपत्तिरिति शेषः। वस्तुतोऽसाधारणाकारत्वेऽपि तयोस्तथात्वस्याग्रहान्न भ्रमविरोधः। शुक्तित्वादेरसाधारण्यग्रह एव हि रजतादिभ्रमनिवर्तक इति भावः। अहंत्वादेरात्मासाधारण्याग्रहाद्देहात्मभ्रमः; देहात्मभ्रमात्तदग्रह इत्यन्योन्याश्रयपरिहारायानादेरित्युक्तम्। तदाहुर्भट्टसुदर्शनपादाः—"ज्ञानस्यात्मासाधारणाकारस्य स्फुरणात् भ्रमानुपपत्तिरिति चेन्न; तस्यासाधारणत्वास्फुरणात्। असाधारणतया स्फुरतो धर्मस्य हि भ्रमविरोधित्वं दृष्टम्। यथा शुक्तित्वादेः। शुक्तित्वं शुक्त्यसाधारणतया पूर्वं ज्ञातं पश्चाद्भ्रमं निवर्तयति। न तावज्ज्ञानं देहातिरिक्तात्मासाधारणधर्मत्वेन क्वचिद्दृष्टचरम्। अतो भ्रमः संभवति। आत्मासाधारणधर्मत्वादर्शनादध्यासः; अध्यासादसाधारणधर्मत्वाग्रहणमित्यन्योन्याश्रयोऽनादितया परिहृतः" इति। तद्वैसाधारण्यग्रहादिना देहात्मविवेकः कदा भवितेत्यत्राह—इदानीमित्यादि। इदानीं—शास्त्राभ्यासयोग्यतादशायाम्।

पुरुषः—आत्मा। श्रुतिभिः—"भोक्ता भोग्यं प्रेरितारम्" "अक्षरात् परतः" "तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः" इत्यादिकाभिः, नयैः—कृतहानाकृताभ्यागमप्रसङ्गाद्यनुकूलतर्कैः; स्वयोगेन—स्वात्मावलोकनसाधनभूतेन यमाद्यङ्गकेन समाधिविशेषेण; 'युज समाधौ' इति धातुपाठः; आद्यशब्देन दिव्यज्ञानपरिग्रहः। ज्ञानं ह्यार्षं दिव्यं चेति द्विविधम्। तत्रार्षं योगजम्। दिव्यं तु भगवत्प्रसादजमिति। (अस्मादि[धी]मताम्) अस्मदादीनां मनःप्रणिधानमप्याद्यपदेन सङ्गृह्यते। तदुक्तं न्यायपरिशुद्धौ—"असमाहितधियामस्मदादीनामपि निरुद्धबाह्यकरणवृत्तीनां मात्रया मनःप्रणिधानेऽपि प्रहालोकयोरिव देहदेहिनोर्भेदः स्फुरत्येव" इति। एतैः परिकरैस्तु वपुरादेः देहेन्द्रियमनःप्राणधीभ्यः। अन्यः स्फुरति—भिन्नः प्रकाशते। वपुरादिर्यस्मिन् सन्घाते स वपुरादिस्तस्मादत एकवचनोपपत्तिः॥ (65)

* * * *

[अव०] "अतद्रूपारोपस्तदुपरतिरित्यादि घटते" इत्यत्र भ्रमाविरोधिनो न तन्निवर्तकत्वं, शाब्दापरोक्षस्य तु न तन्निवर्तकता, शब्दप्रत्यक्षप्रमाणलक्षणसाङ्कर्यप्रसङ्गेन तस्यैवासंभवादित्यादिकमभिप्रेतम्। शाब्दापरोक्षस्य भ्रमानिवर्तकत्वादेव जीवन्मुक्तिरपि न संभवतीत्युच्यते। यथा भाषितं भगवता—"यतो वाक्यादापरोक्ष्यज्ञानासंभवाद्वाक्यार्थज्ञानादविद्या न निवर्तते तत एव जीवन्मुक्तिरपि दूरोत्सारिता" इति। "अधिष्ठाने पुंसि" "अहंत्वज्ञातृत्वे" इत्यादिश्लोकद्वयं तु स्वपक्षे देहात्मभ्रमोपपादनपरत्वात् प्रासङ्गिकम्। जीवन्मुक्तेः पृथङ्निरपेक्षत्वद्योतनाय च "इदं मायावादः" इति निगमनं कृतम्—

[मू०] जीवन्मुक्तिमतं न जीवति यतः शस्त्रेण शास्त्रात्मना
लूनं लोकविरुद्धसिद्धि च यतस्तेनेदमादावपि।
आपस्तम्बनिरस्तमौपनिषदं प्रस्थानमातस्थुषा-
माचार्योऽपि निराचकार खलु तद्द्वैपायनाख्यो मुनिः॥ (66)

[व्या०] जीवतः सशरीरस्य, मुक्तिः मोक्षः, तस्य मतं प्रामाणिकत्वेनाभ्युपगमः, न जीवति—प्राणधारणं न करोति। बलवत्प्रमाणजातैस्तस्याप्रामाणिकत्वबोधनात्; स्वविषयसत्यत्वलक्षणप्राणधारणशून्यमित्यर्थः। कुत इत्यत्राह—यत इत्यादि।

यतः शास्त्रात्मना "तस्य तावदेव चिरम्" इत्यादिभूयश्शास्त्रलक्षणेन शस्त्रेण लूनं—छिन्नम्। छिन्नस्य हि प्राणधारणं दुश्शकमिति भावः। उत्तरयच्छब्दस्य तच्छब्दनिरपेक्षत्वाच्छास्त्रात्मना शस्त्रेण च्छिन्नत्वान्न जीवतीति लभ्यते। यतो लोकविरुद्धसिद्धि—यतः प्रत्यक्षविरुद्धात्मलाभवत्। वाक्यार्थज्ञानमात्राद्बन्धनिवृत्त्यदर्शनात्। (लोकविरुद्धसिद्धित्वं) चकारः शास्त्रप्रतिषेधं समुच्चिनोति। तेन—शास्त्रप्रत्यक्षबाधितस्वरूपसत्ताकत्वेन। आदौ—पूर्वम्। इदं—जीवन्मुक्तिमतम्। आपस्तम्बनिरस्तमपि भवति। आपस्तम्बेन निषिद्धं च भवतीत्यर्थः। तथा च भगवानापस्तम्बः—"वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्। बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्। बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत" इत्यादिना जीवन्मुक्तिं निवारितवान्। वेदांस्त्रिवर्गसाधनकर्माणि। इमं लोकममुं च तत्फलमैहिकामुष्मिकैश्वर्यं बुद्धे वाक्यार्थज्ञाने क्षेमप्रापणं मोक्षः। किं च तत्—श्रुतिस्मृतिनिषिद्धं जीवन्मुक्तिमतं कर्म। उपनिषद इदम् औपनिषदम्। 'तस्येदम्' इत्यण्प्रत्ययः। दुर्ग्रहब्रह्मप्रतिपादनचतुरवेदान्तभागीयं प्रस्थानं तत्त्वनिर्धारणपारगमनप्रारम्भं पन्थानं वा। आतस्थुषाम्—आस्थितवतां बोधायनटङ्कद्रमिडभारुचिगुहदेवप्रभृतीनाम्। आचार्यः—शास्त्रार्थोपदेशानुष्ठापनादिकर्ता। द्वैपायनाख्यः—"द्वीपे बदरिकामिश्रे" इत्यादिदिशा द्वैपायन इत्याख्या यस्य तथोक्तो मुनिः—मननशीलः व्यास इत्यर्थः। निराचकार खलु—निराकृतवान् खलु। शारीरकमीमांसातुरीयलक्षणद्वितीयचरणे हि भगवता व्यासेन "नोपमर्देनातः" इति सूत्रितम्। तच्च सूत्रं जीवन्मुक्तिनिरसनपरं भाषितम् भगवता—

"अतः 'यदा सर्वे प्रमुच्यन्ते कामायेऽस्य हृदि स्थिताः।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते"

इति वचनं न बन्धोपमर्देनामृतत्वं वदति" इति। अत्र भट्टसुदर्शनपादाः—"जीवन्मुक्तिनिराचिकीर्षातिशयादिदं सूत्रमुक्तम्। उपासनविधानात्तस्याप्रयाणादनुवृत्तिश्रुतेरुत्क्रान्तिश्रुतेर्देशविशेषप्राप्त्या सर्वबन्धविमोक्षश्रुतेरीदृशानेकश्रुतीनां बाधप्रसङ्गात् प्रत्यक्षविरोधाच्च जीवन्मुक्तिरनुपपन्नेति भावः" इत्यनुजगृहुः। आतस्थुषामिति आङ्पूर्वात् तिष्ठतेर्लिटः क्वसुः॥ (66)

* * * * *

[अव॰] "भेदश्रुतीनामनृतविषयता" "लक्षणा चैक्यवाचाम्" इत्याभ्यां वाक्याभ्यां मृषावादिभिर्वेदप्रामाण्य[म](मित्य)भ्युपगन्तुं न शक्यम्; अबाधितार्थकस्वरूपस्य तत्त्वावेदकत्वस्य पूर्वभागे दुर्लभत्वात्; (यस्य यद्रूपं तस्य तस्मिन् प्रतिपादकत्वरूपस्य च) तस्याद्वैतवाक्येष्वभावात् तेभ्यो निष्प्रकारकज्ञानस्यैव तैः स्वीकारात्; प्रातिभासिकार्थान्यत्वे सति व्यधिकरणाप्रकारकत्वस्यापि अबाधितार्थकत्वपर्यवसानादुक्तदोष इति सूचितम्। किं च ते हि शैलूषवद्वैदिकभूमिकां परिगृह्य, वेदप्रामाण्यं वदन्त इव प्रविश्य, वेदस्य व्यावहारिकार्थविषयत्वेनाप्रामाण्यापरपर्यायं प्रामाण्यमुक्त्वा, कात्स्न्येंन तथोक्तौ वैदिकैर्बहिष्कारो भवितेति (ध्या)कस्यचित्तत्त्वावेदकत्वं वदन्त इव वैदिकगोष्ठीमध्यारुह्य, तस्यापि तत्त्वावेदकतयाभिमततत्त्वमस्यादेः संसर्गबोधकत्वमपह्नुत्य, पदार्थस्यैव वाक्यार्थतां वदन्तः, पौनरुक्त्यप्रसङ्गेन तदपि त्याजयन्तो बोधकत्वमेव नास्ति कुतः प्रामाण्यमिति व्यञ्जयन्तीति महाचार्यचरणानुगृहीतरीतिरपि ताभ्यामभिप्रेता भवति। अत्र तु मुखान्तरेण वेदप्रामाण्यपरिग्रहानुपपत्तिस्तेषामुच्यते—[क्वेत्यादि]

[मू॰] क्व वेदान्ताः क्वामी निहितमतयः शंकरमते
वदन्तः प्रामाण्यं भ्रमविलसितं वेदवचसाम्।
अहो यद्वद्बुद्धग्रथितफणितीनामथ च ते
कलिग्राहग्रस्तैरगणिषत वेदान्तिन इति॥ (67)

[व्या॰] वेदान्ताः क्व भ्रमप्रमादविप्रलिप्साकरणापाटवादिमूलत्वसंभावनाविधुरा उपनिषदः कस्मिन् प्रकारे;[1] अत्र वर्तन्त इति शेषः। अप्रामाण्यगन्धेनापि शून्या इत्यर्थः। शंकरमते—शंकराभ्युपगतमायावादपक्षे निहितमतयः—बुद्धेः स्वारसिकप्रसरं निरुध्य अतिकृच्छ्रेण निक्षिप्तबुद्धयः। एतेन श्रद्धालूनामपि पूर्वापरव्याघातवशाद्दुरारोहत्वं तन्मतस्य व्यज्यते। वेदवचसां निर्दोषापौरुषेयवेदवाक्यानाम्। बुद्धग्रथितफणितीनां यद्वत् विप्रलिप्सुना बुद्धेन निबद्धानां गिरामिव। भ्रमविलसितं भ्रमविषयभूतं, दोषमूलत्वेन मिथ्याभूतम्।

---

1 कु

प्रामाण्यं वदन्तः—बुद्धदोषमूलकत्वाद्बुद्धागमप्रामाण्यं मिथ्या ; एवं ब्रह्मदोषमूलकत्वाद्वेदप्रामाण्यमपि मिथ्येति यथा पर्यवस्यति तथा वदन्तः । अमी अदूरविप्रकृष्टा दुर्वादिनः । क्क कस्मिन् प्रकारे वर्तन्ते ? उपदर्शितमहाचार्यचरणानुगृहीतदिशा वेदप्रामाण्याभ्युपगमगन्धेनापि शून्या इत्यर्थः । शंकरमते निहितमतय इत्यनेन कुमारिलादयो व्यावर्त्यन्ते । ते ह्यार्थवादमात्रस्य स्वार्थे प्रामाण्याभावमूचुः । विध्यंशे तु प्रामाण्यं स्वीकृतवन्तः । शंकरस्तु न तथेति । अत्र च दोषमूलत्वाद्वेदप्रामाण्यं मिथ्येति मुखान्तरेण वेदप्रमाण्यपरिग्रहानुपपत्तिरुक्ता भवति । एवं वेदान्तानां शांकराणां च प्रमाणप्रमातृभावलक्षणसंबन्धस्यात्यन्तायोगमुपपाद्य तेषां वेदान्तिशब्दव्यवहर्तव्यतायामनुशेते—अथ चेत्यादिना ; अथ च तथापि तेषां वेदान्तैः सह उपदर्शितसंबन्धात् सत्तायोगेऽपि । ते शांकराः । कलिग्राहग्रस्तैः—कलिदोषप्रयुक्ताग्रहगृहीतैः कलिदोषलक्षणनक्राक्रान्तैर्वा मन्दैः । वेदान्तिन इत्यगणिषत—प्रमाणप्रामातृभावलक्षणवेदान्तप्रतियोगिकसंबन्धवन्त इति स्वीकृताः । अहो—विस्मये । तच्छब्दप्रवृत्तिनिमित्तलेशेनापि शून्येषु तच्छब्दप्रयोगो विस्मयनीय इत्यर्थः । कलिग्राहेत्यादिना नायं व्यवहर्तव्यानामपराधः; किं तु व्यवहर्तॄणां तन्मूलभूतकलेश्चेति व्यज्यते । तदिदं भाषितं भगवता—"तत्तु भ्रान्तिमूलमिति चेदेतदपि भ्रान्तिमूलमिति त्वयैवोक्तम्" इति । अगणिषतेति गणयतेः कर्मणि लुङ् ॥ (67)

* * * *

[ अव० ] यद्यप्यप्रमाणत्वं तत्पक्षेण श्रुतीनाम्; तथापि, प्रामाणिकजनवञ्चनार्थं तैर्वेदार्थनिर्णयौपयिकतया कृतं मीमांसान्यायसंचारं दूषयति—[ यदित्यादि ]

[ मू० ] यत्सामान्यविशेषवर्त्मसु गुणप्रत्यासविध्यात्मसु
त्रय्यन्तेषु जनार्दनप्रणयिषु प्राबल्यदौर्बल्ययोः ।
प्रस्तावं प्रतिपेदिरे कतिचनापच्छेदनीतिच्छला-
न्मीमांसापदवी परिश्रमकथा दूरेषु तच्छोभते ॥ (68)

[ व्या० ] कतिचन शंकरमतनिहितमतयो वादिनः । सामान्यं व्यापकधर्मावच्छिन्नो विधिः, विशेषः तद्व्याप्यधर्मावच्छिन्नो विधिः, तौ निर्णेयतयात्र स्त इति सामान्य-

विशेषः षष्ठान्त्याधिकरणनयः अर्शआदित्वादच्प्रत्ययः ; तस्य वर्त्मसु विषयभूतेषु । यद्वा सामान्यविषयकेषु विशेषविषयकेषु चेत्यर्थः । गुणसामान्यगुणविशेषविधिनिषेधलाभाय तु गुणप्रत्यासेत्यत्र गुणशब्दः । गुणप्रत्यासविध्यात्मसु गुणनिषेधविध्यात्मकेषु । जनार्दनप्रणयिषु—व्याख्यातॄणां प्रयत्नेन विनापि भगवन्नारायणपरेषु । त्रय्यन्तेषु—अस्खलितवाक्यपदवर्णानुपूर्विकेषूपनिषद्भागेषु ।

अत्र गुणसामान्यनिषेधो गुणविशेषनिषेधपर्यवसायीति गुणविशेषनिषेधवाक्यनिर्गुणवाक्ययोः सामान्यविशेषन्यायविषयत्वमिति सूचनाय सामान्येत्याद्युक्तिः । सामान्यविशेषेत्यनेन विधिनिषेधसूचितविरोधेन च गुणसामान्यनिषेधस्य गुणविशेषविधेश्च उत्सर्गापवादन्यायविषयत्वं सूच्यते । गुणप्रत्यासविध्यात्मस्वित्यनेन निषेधार्थत्वं न गुणविधेर्युज्यते ; स्वेनैव विहितानां स्वेनैव निषेधे श्रुतेरुन्मत्तप्रलपितत्वापत्तेः; 'प्रक्षालनाद्धि' न्यायविरोधापत्तेरिति च सूच्यते । निषेध्यसमर्पकत्वमपि गुणवाक्यस्य न युक्तं, निर्गुणमित्यादिवाक्यस्थगुणादिपदानामेव तत्समर्पकत्वादिति च गुणप्रत्यासेत्यनेन सूच्यते । अत एव गुणविग्रहादिविधिनिषेधयोर्भिन्नविषयत्वेनाविरोध इत्यपि सूचितम् । सामान्यविशेषविषयत्वाद्विधिनिषेधयोर्न षोडशीग्रहणाग्रहणवाक्यवन्निषेधानुसारेण विधिनयनमित्यपि सूचितम् । त्रय्यन्तेष्वित्यनेन नियतपौर्वापर्यस्यानुष्ठानात्मकत्वस्य च प्रतीतेः, अनियतपौर्वापर्यानुष्ठानविशेषविषयकापच्छेदन्यायाविषयत्वमनयोरिति सूच्यते । जनार्दनप्रणयिष्वित्यनेन सगुणवाक्यानामपरब्रह्मविषयत्वं निर्गुणवाक्यार्थानां तु परब्रह्मविषयत्वमिति विषयविभागो न युक्तः । 'एष आत्मा' इत्यादिवाक्येनोभयोरेकविषयकत्वबोधनस्वारस्यादिति सूचितम् । जनार्दनेत्यनेन सामान्यविशेषन्यायसिद्धं देवतापारमार्थ्यमपि प्रसङ्गात् सूचितम् । वेदान्तानां भगवत्परत्वादपि सविशेषपरत्वमिति च जनार्दनेत्यनेन सूचितम् । किं च नोपासनार्थत्वं गुणविधेर्युक्तम् । तथा सति स्वरूपपरवाक्यस्यापि तदापत्तेः । अतो भगवत्स्वरूपधर्मतयैव गुणानां सगुणवाक्यप्रतिपाद्यत्वमिति च जनार्दनप्रणयिष्वित्यनेन सूचितम् । सर्वस्यैव चोक्तार्थस्य सूचनाय सामान्यविशेषवर्त्मस्वित्यादीनि विशेषणान्युपात्तानीति बोध्यम् ॥

अपच्छेदनीतिच्छलात्—अपच्छेदाधिकरणोक्तन्यायापदेशेन । छलपदेन सगुणनिर्गुणवाक्ययोरपच्छेदवाक्यवैषम्यं द्योत्यते । प्राबल्यदौर्बल्ययोः क्रमेण गुणनिषेधकवाक्यानां सगुणवाक्यबाधकताप्रयोजकबलत्वस्य सगुणवाक्यानां निर्गुणवाक्यबाध्यता-

प्रयोजकदुर्बलत्वस्य च, प्रस्तावं प्रसक्तिं, प्रतिसन्धानमिति यावत् । प्रतिपेदिरे—भेजिरे । परीक्षकाणां प्राबल्यदौर्बल्यप्रतिसन्धानं गुणनिषेधविधिवाक्येषु जायत इति जज्ञिरे वा इति यत्तत्, मीमांसा द्वादशलक्षण्या(त्म)[त्मि]का कर्मनिर्णयौपयिकन्यायप्रतिपादकसूत्रसन्दर्भरूपा ; सैव पद्वी वेदार्थनिर्णयोपायः—

"धर्मे प्रमीयमाने तु वेदेन करणात्मना ।
इतिकर्तव्यतामार्गं मीमांसा पूरयिष्यति ॥"

इत्यादिभिरुक्ता ; तत्र परिश्रमः सदातनाध्ययनाध्यापनादिक्लेशः; तस्य कथा वार्ता ; तया दूरेषु रहितेषु मन्देषु शोभते । रमणीयं भवति । मीमांसानभिज्ञा एव इदं वक्तुं श्रोतुं चार्हन्तीत्यर्थः । परिश्रमकथेत्यपि पाठः । मीमांसाध्वनि निरन्तरगतागतप्रसक्तीत्याद्यर्थः ॥

अत्र सुदर्शनभट्टपादाः—"अपच्छेदन्यायो ह्यनियतविरोधपौर्वापर्यविषयः । उद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति । तत्रापि क्रमेणापच्छेदोऽप्यनियतः । नियमे सति हि सर्वस्वदक्षिणाकत्वादक्षिणाकत्वविरोधनियमः । उभयोरपच्छेदे तस्य क्रमभावित्वेऽप्युद्गात्रपच्छेदः पूर्वभावी, इतरस्तु चरमभावीति विपर्ययेणेति वा नियमोऽपि नास्ति । अतोऽपच्छेदन्यायविषयः प्रयोगावधिकविरोधः । सगुणनिर्गुणवाक्यविरोधस्तु स्वरूपप्रयुक्तः । विधिनिषेधरूपनियत(ानियत)पौर्वापर्यश्च । अतो विरोधाभ्युपगमेऽप्यनियतविरोधपौर्वापर्यविषयोऽपच्छेदन्यायो नात्र प्रवर्तते" इत्याहुः ।

उल्लङ्घितश्चायं न्यायो महाचार्यचरणैः—"क्रमेणापच्छेदे उपक्रमन्यायः कथं न प्रवर्तते ? परत्वात् प्राबल्ये कथमुपक्रमन्यायानुत्सादः । अतो न्यायद्वयस्य मिथो व्याघाते सति इत्थमिह निर्णयः कार्यः—अनुपसंजातविरोधितया पूर्वस्मादर्थप्रतीतौ सत्यामुपसंहारस्योत्पत्तिदशायामेव सन्देहावष्टब्धत्वात् पूर्वनिर्णयानुसारेणोत्तरार्थनिर्णयः कार्य इत्ययमुपक्रमन्यायः । नैमित्तिकशास्त्रद्वयार्थबोधदशायां तच्छास्त्रयोः पौर्वापर्याभावान्नोपक्रमन्यायस्य तत्र प्रवृत्तिः । ततश्च प्रयोगविशेषपर्यालोचनया विरुद्धयोर्नैमित्तिकयोः किमनुष्ठेयमिति विशये नैमित्तिकानुष्ठानकालं प्रति सन्निहितत्वात् द्वितीयनिमित्तहेतुकमेव कर्तव्यम् । अत उत्तरकाले प्रतिहर्त्रपच्छेदाभावे उद्गात्रपच्छेदे इत्थंकर्तव्यमुत्तरकाले उद्गात्रपच्छेदाभावे प्रतिहर्त्रपच्छेदे इत्थं कर्तव्यमिति प्रायश्चित्तशास्त्रार्थ इष्यते । अयमपच्छेदन्यायः—'पूर्वाबाधेन' इत्यत्र बाधश्च पूर्वनैमित्तिककर्तव्यताबुद्धिनै-

मितिकानुष्ठानकालयोर्मध्ये द्वितीयनैमित्तिके कर्तव्यताबुद्ध्युत्पत्त्या पूर्वकर्तव्यताबुद्धेर्व्यवधान-मितोऽतिरिक्तबाधानिरूपणादुपक्रमन्यायानवष्टम्भसिद्धेश्च" इत्यादिना, अतो मीमांसानभिज्ञानामेवेदं सगुणनिर्गुणवाक्ययोरपच्छेदन्यायविषयत्वकथनं रमणीयमिति भावः ।

गुणप्रत्यासविध्यात्मस्विति सामान्यविशेषवर्त्मस्विति च विशेषणद्वयेन गुणविशेषविधेर्गुणसामान्यविधेश्चोक्त्या ब्रह्मण्यार्थगुणनिषेधनिरासो व्यञ्जितः । ज्ञानस्य ज्ञानाश्रयत्वादर्शनाद्ब्रह्मणो ज्ञानमात्रत्वप्रतिपादनेन निर्गुणत्वं हि फलितमित्ययमार्थगुणनिषेधः । तन्निरासश्चेत्थम्—ज्ञानस्य ज्ञानाश्रयत्वाभावः किं व्याप्त्या कथ्यते ? उत श्रुतिस्मृतिप्राबल्यात् । व्याप्त्या चेत् ज्ञानानाश्रयभूतं विषयप्रकाशकं ज्ञानं कस्यचिद्धर्मभूतमेव दृष्टमिति धर्मत्वेनाङ्गीक्रियताम् । यदि श्रुतिप्राबल्यात् स्वतन्त्रत्वेनाङ्गीक्रियते तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियतामिति सोऽयमार्थगुणनिषेधो गुणविधिश्रुत्युपादानेन निरस्तः ॥ (68)

* * * * *

[ अव० ] एवमपच्छेदन्यायाविषयत्वोक्तेः सामान्यविशेषन्यायोत्सर्गापवादन्यायविषयत्वस्य च वक्ष्यमाणत्वाच्च गुणादिविधिनिषेधवाक्यानां भिन्नविषयत्वमाह—[ यदित्यादि ]

[ मू० ] यद्ब्रह्मणो गुणविकारशरीरभेद-
कर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योन्यभिन्नविषया न विरोधगन्ध-
मर्हन्ति तन्न विधयः प्रतिषेधबाध्याः ॥ (69)

[ व्या० ] यद्वा-श्रुत्यैव विहितानां श्रुत्यैव निषेधे श्रुतेरुन्मत्तप्रलपितत्वापत्तेर्गुणादिविधिनिषेधयोर्भिन्नविषयत्वात्कथंभावेन निषेधो न विधिबाधक इत्युच्यते । यत्—यस्मात् । ब्रह्मणः—परमात्मनः । गुणश्च, विकारश्च शरीरं च भेदश्च कर्म चादयो येषां तथोक्तास्ते गोचरा विषया ययोस्तथोक्तयोस्तयोर्विधिप्रतिषेधयोर्भावाभावयोर्वाचः बोधरूपवाक्यानि । अन्योन्यभिन्नविषयाः सत्यो मिथो विभिन्नविधेयनिषेध्यकाः सत्यः, त एव विरोधगन्धं बाध्यबाधकभावप्रयोजकमेकविषयत्वविरहात्मकं विरोधम् । नार्हन्ति नोक्तविरोधयोग्या भवन्ति । तत्—तस्मात् विधयो गुणादिसद्भावबोधक-

वाचः । प्रतिषेधबाध्या न भवन्ति गुणाद्यभावबोधकवाक्यबाध्या न भवन्ति । अतोऽपि नापच्छेदन्यायप्रवृत्तिरित्यर्थः ॥

गुणविधयः "वर्षायुतैर्यस्य गुणाः" "समस्तकल्याणगुणात्मकोऽसौ" इत्यादयः । गुणप्रतिषेधाः—"निर्गुणं निष्क्रियम्" इत्यादयः । विकारविधयः—"तदात्मानं स्वयमकुरुत" "यथोर्णनाभिः सृजते गृह्णते च" "जुष्टं यदा पश्यति" "धातुः प्रसादान्महिमानम्" इत्यादयः । विकारनिषेधाः—"अविकाराय" "सत्यं ज्ञानम्" "सत्यस्य सत्यम्" इत्यादयः । शरीरविधयः—"आदित्यवर्णम्" इत्यादयः । शरीरनिषेधाः—"अशरीरम्" "निष्कलम्" इत्यादयः, "न तस्य कार्यं करणं च विद्यते" इत्यादयश्च । भेदविधयः—"पृथगात्मानम्" इत्यादयः । भेदनिषेधाः—"नेह नानास्ति" इत्यादयः । कर्मविधयः—"[1]एकः शास्ता" "विष्णोः कर्माणि" इत्यादयः । कर्मनिषेधाः—"निष्क्रियम्" इत्यादयः ' आदिपदेन श्यामादिवर्णपरिग्रहः । तद्विधिः—"नीलतोयदमध्यस्था" इत्यादिः । तन्निषेधास्तु—"अगोत्रम्" इत्यादयः । अत्र गुणशब्दः सत्त्वाद्यर्थकः । विकारशब्दो मृतावस्थार्थकः । अशरीरमिति विशरणयोगिदेहवाचि । नेह नानेति नानाशब्दो विनार्थकः । क्रियाशब्दः परिस्पन्दार्थक इति वा । गुणादिशब्दाः सामान्यपरा इति वा । आद्ये भिन्नविषयत्वान्नोत्सर्गापवादनयः । द्वितीये तु तन्नयः । अतः एतेषु चोत्सर्गापवादन्यायसामान्यविशेषन्याययोः प्रवृत्त्या गुणादिनिषेधानां विहितगुणविग्रहादिव्यतिरिक्तहेयगुणविग्रहादिविषयत्वम्; "सत्त्वादयो न सन्ति यत्र च प्राकृता गुणाः" "न भूयः संघसंस्थानो देहोऽस्य परमात्मनः" इत्याद्युक्तविशेषनिषेधपर्यवसायित्वं वा युक्तम् । भेदनिषेधस्य च प्रकारप्रकारिणोः प्रकाराणां च मिथो भेदस्य प्रामाणिकत्वाद्ब्रह्मकात्मकस्वतन्त्रवस्त्वात्मकभेदविषयकत्वं विहितैक्यविरोधिभेदनिषेधौचित्याद्युक्तम् । विकारविषयोऽपि परमैश्वर्यावहजगदाकारतारूपविहितपरिणामव्यतिरिक्तहेयविकारविषयको 'यजेत' 'उपसीत' इत्यादिविधिसिद्धयागोपासनादिजन्यप्रीत्यात्मकविकारव्यतिरिक्तविषयकश्चेत्यादिकमनुसन्धेयम् ॥ (69)

* * * *

---

1 शास्ता.

[अव० ] "यत्सामान्यविशेषवर्त्मसु" इत्यत्राभिप्रेतां गुणादिविधिनिषेधयोरुत्सर्गापवाद-न्यायसामान्यविशेषन्यायविषयतां कण्ठतो वक्ति—[अग्नीषोमीयेत्यादि]

[मू० ] अग्नीषोमीयहिंसा निजविधिविहिता किं निषिद्धा न हिंस्याद्-
भूतानीत्येतयोक्त्या पशुपदविषयश्छाग एव न्यरूपि ।
छागो वा मन्त्रवर्णादिति च तदुभयन्यायतो हेयधर्म-
क्षेपार्था निर्गुणोक्तिः श्रुतशुभगुणके निर्मले ब्रह्मणि स्यात् ॥ (70)

[व्या० ] यद्वा यत्परैरुक्तं कारणत्वरूपेण सगुणत्वं स्वरूपेण निर्गुणत्वमिति गुणविधि-निषेधयोर्विषयभेदे सति नोत्सर्गापवादन्यायः । किं च 'अस्थूलम्' इत्यादिनिषेध-स्यापि विशेषविषयतया न पदाहवनीयन्यायप्रवृत्तिः । अत एव न सामान्य-विशेषन्यायविषयत्वमपीति तन्न ; गुणोपासनस्यातात्त्विकज्ञानत्वेन(तया) मोक्षा-सिद्धिप्रसङ्गात् । तथा सति 'स्वेन रूपेणाभिनिष्पद्यत' इत्यादि विरुध्येत । ततश्च मोक्षोपायभूतोपासनविषयत्वात् सगुणत्वस्य तात्त्विकत्वमावश्यकमिति गुणविधि-निषेधयोरेकविषयत्वमवर्जनीयमिति विषयभेदायोगादुत्सर्गापवादन्यायप्रवृत्तिरवि-घाता । किं चेत्यादिकमप्यनुपपन्नम् । निर्गुणमित्यादिवाक्यापेक्षया तन्न्याय-संभवात् ।

तदेतदाह—अग्नीषोमीयेत्यादिना । न हिंस्याद्भूतानीत्येतयोक्त्या—"न हिंस्यात् सर्वा भूतानि" इति वाक्येन । निजविधिविहिता—"अग्नीषोमीयं पशुमालभेत" इति वाक्यविहिता । अग्नीषोमीयस्य पशोर्हिंसा । निषिद्धा किम् ? किमिति क्षेपे । तथा च [न] निषिद्धेत्यर्थः । अग्नीषोमीयहिंसातिरिक्त-हिंसानिषेधकत्वं न हिंस्यादित्यादिवाक्यस्येति भावः ॥

तदुक्तं दशमे—"अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तु संदिग्धमारा-द्विशेषशिष्टं स्यात्" इति । अत्र "यदाहवनीये जुहोति" इति सामान्यशास्त्रस्यापि "पदे जुहोति" इत्यादिविशेषशास्त्रवत् क्लृप्तत्वप्रत्यक्षश्रुतत्वाभ्यां लिङ्गातिदेशवैषम्या-द्बाध्यत्वायोगेन तुल्यबलत्वाद्विकल्पः ।

"सामान्यस्यापि लब्धत्वात् प्रत्यक्षेण विशेषवत् ।
नास्ति लिङ्गादिवद्बाधो नापि बाधोऽतिदेशवत् ॥" इति पूर्वपक्षे,

"प्राप्तिः सामान्यशिष्टस्य विशेषे लक्षणावशात् ।
श्रुत्या विशेषशिष्टस्य तस्मादस्ति बलाबलम् ॥"

इति सामान्यधर्मप्रकारेण विशेषधर्मावच्छिन्नस्योपस्थित्यपेक्षया विशेषधर्मप्रकारेण तदुपस्थितेः शीघ्रभावित्वेन, पत्नीसंयाजादिहोमेषु तत्त्वेन झटिति प्राप्ता पदादिस्थानता होमसामान्ये(न मन्थर)प्राप्तमाहवनीयं रुणद्धीति सिद्धान्तितम् । तन्न्यायेन हिंसास्थलेऽपि प्रवर्तनानिवर्तनयोर्विरोधाद्विशेषतः श्रुताग्नीषोमीयहिंसायां प्रवर्तनान्वयेन तद्व्यतिरिक्तहिंसायां निवर्तनान्वयादग्नीषोमीयहिंसा न निषिद्धा किलेत्यर्थः । अयमेवोत्सर्गापवादन्यायः ॥

सामान्यविशेषन्यायमाह—पशुपदेति । "छागो वा मन्त्रवर्णात्" इति षष्ठान्त्याधिकरणेन छाग एव, पशुपदविषयः—पशुशब्दवाच्यः । न्यरूपि—निर्णीतः । निपूर्वाद्रूपयतेर्विचारार्थकात् कर्मणि लुङ् तशब्दलोपश्च । "छागो वा मन्त्रवर्णात्" इत्यत्र "सामान्यावसिता तावच्छोदनावाक्यभेदतः । मन्त्रस्तदविरोधेन पाक्षिको यौगिकोऽपि वा" इति "अग्नीषोमीयं पशुमालभेत" इति विधिः सामान्यपर्यवसित इति तत्परतन्त्रोऽपि छिनत्त्यागच्छतीति योगवृत्त्या छागद्रव्यकप्रयोगविषयकतया वा उपपाद्यत इति पूर्वपक्षे—

"चोदना पशुसामान्यमङ्गत्वेनावबोधयेत् ।
छागेऽपि[1] विकल्पं तत्तु प्रतिव्यक्तिसमाप्तितः ॥
मन्त्रः प्रकरणाम्नानान्नित्यमङ्गं प्रतीयते ।
क्लृप्तया रूढिशक्त्या च सच्छागस्यैव वाचकः ॥
तेन तं तादृशं गृह्णन् विधिरात्मविरोधिनम् ।
विधत्ते छागमेवाङ्गं तस्माच्छागोपसंग्रहः ॥"

इति सिद्धान्तितत्वेन पशुशब्दः सामान्यवचनोऽपि छागरूपविशेषपर्यवसायीति निर्णीतमित्यर्थः । चकारः पूर्वोक्तसमुच्चायकः । भवतु न्यायद्वयम्, ततः किमित्यत्राह—तदुभयेत्यादि । ताभ्यामुभाभ्यां न्यायाभ्यामित्यर्थः । उभशब्दाद्वृत्तावयच्प्रत्ययः स्वार्थिकः । उभशब्दयोगादेव द्विवचनान्तादपि न्यायशब्दात्तसिराश्रितः । श्रुतशुभगुणके—श्रुतिबोधितकल्याणगुणे । 'शेषाद्विभाषा' इति कप् । निर्मले

---

1 प्यवि.

मलं स्वाश्रयनिकर्षावहधर्मः, तद्रहितत्वेन श्रुते । ब्रह्मणि, **निर्गुणोक्तिः**— निर्गुणमित्युक्तिः । **हेयधर्मक्षेपार्था स्यात्** श्रुतकल्याणगुणव्यतिरिक्तहेयधर्माभावबोधिका, हेयधर्माभावबोधप्रयोजनिका वा भवितुं युक्तेत्यर्थः । क्षेपो यद्यभावस्तर्ह्यर्थोऽभिधेयः । यद्यभावबोधनं क्षेपस्तथा त्वर्थः प्रयोजनमिति विवेकः ॥

अत्र क्रमेण श्रुतकल्याणगुणके हेयधर्मक्षेपार्थेत्युत्सर्गापवादन्यायसिद्धार्थकथनम् ; निर्मले हेयधर्मक्षेपार्थेति सामान्यविशेषन्यायसिद्धार्थकथनम् ; निर्गुणमिति गुणसामान्याभावबोधकस्य सत्त्वादि(रूपगुण)[गुणरूप]स्वाश्रयनिकर्षावहधर्माभावेऽप्यवसानस्योचितत्वात् [इति भावः] । अत्र च श्रुतशुभगुणकत्वनिर्मलत्वयोः सामानाधिकरण्यादेकवचनान्निर्गुणोक्तिरित्युक्तेश्च पूर्वोक्तपरकीयचोद्यनिराससिद्धिरिति ध्येयम् । हिंसावाक्यस्य उत्सर्गापवादन्यायविषयत्वकथनं तु भट्टाभ्युपगतप्रक्रियामनुरुध्य कृतम् । न तु स्वपक्षेण तथा कृतम् । पशुसंज्ञपनस्य हिंसात्वाभावसिद्धान्तात् । (तदुक्तमशुद्धमिति चेन्न) । "शब्दात्" इति सूत्रे [उक्तं] भट्टसुदर्शनपादैः—"अयमेव समीचीनो दुष्प्रधर्षणः परिहारः । अतः श्येनाग्नीषोमीयवैषम्यं चेदमेव । अल्पदुःखदोऽप्यतिशयिताभ्युदयसाधको व्यापारो रक्षणम् । अनर्थोदर्को व्यापारो हिंसेत्यर्थः" इति । उक्तं च वेदान्तकण्टकोद्धारे चम्पकेशगुरुभिः—"वस्तुतस्तु, पशुसंज्ञपनं न हिंसेति सिद्धान्तव्यवस्थितौ मीमांसकव्यवहारानुरोधेन न्यायदर्शनमात्रमिति न तत्राग्रहः" इति "मरणोद्देश्यकव्यापारस्य हिंसात्वे मानाभावात् ; बलवदिष्टाजनकानिष्टफलकव्यापारस्यैव हिंसात्वात्" इति च । सगुणनिर्गुणवाक्येषु विरोधाधिकरणोपक्रमाधिकरणन्यायप्रवृत्तिस्तु परोक्तविरोधपौर्वापर्यनियममुपजीव्याभ्युच्चयतया वक्तव्येति नात्र तदुक्तिरिति ध्येयम् ॥ (70)

* * * *

[अव० ] "आदौ भेदश्रुतीनाम्" इत्यारभ्यैतत्पर्यन्तं सूत्रकारैः साङ्ख्ययोगाचारादिपक्षविषयोद्भावितदोषसाम्यं मृषावादिपक्षस्याभिसन्धाय मृषावादपक्षदूषणं विस्तरेणोक्तवान् । इदानीम् "पत्युरसामञ्जस्यात्" इति सूत्रनिर्णीतदिशा वेदान्तानां भगवत्पारम्यप्रावण्येन देवतान्तरपारम्यं वेदान्तविरोधादनुपपन्नमिति वक्तुं वेदान्तानां तत्परत्वमाह—[कस्त्वमित्यादि]

**[मू० ] कस्त्वं तत्त्वविदस्मि वस्तु परमं किं तर्हि विष्णुः कथं**
**तत्त्वेदंपरतैत्तिरीयकमुखत्रय्यन्तसन्दर्शनात् ।**

अन्यास्तर्हि गिरः कथं गुणवशादत्राह रुद्रः कथं
तद्दृष्ट्या कथमुद्भवत्यवतरत्यन्यत् कथं नीयताम् ॥ (71)

[ व्या० ] "जनार्दनप्रणयिषु" इत्यत्र संग्रहेणोक्तमुपनिषदां भगवत्परत्वमत्र किंचिद्विस्तरेणोच्यते—

"सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवानेक एव जनार्दनः ॥"

इत्येतत्प्रत्यभिज्ञापनाय, रुद्रशरीरको भगवानेवाथर्वशिरश्शिखोक्तोपासनद्वयोपास्य इति, "स्फुटमपुनर्भावाय पुरवैरिकळेबरिणः" इति वक्ष्यमाणार्थप्रतिपत्तिसौकर्याय तु "जनार्दनप्रणयिषु" इत्यत्र जनार्दनशब्दः प्रयुक्तः । "अग्रतः क परवादिसंभवः" इत्युक्तत्वाद्विजिगीषुप्रश्नासंभवेन कंचन जिज्ञासुं प्रति वरदगुरुभिरुक्तोऽयं प्रश्नप्रतिवचनमालारूपश्लोको वक्ष्यमाणविस्तरस्य संग्रहरूपः ॥

कस्त्वम्—इति जिज्ञासोः प्रश्नः । तस्योत्तरं तत्त्वविदस्मि—इति । तत्त्वं परदेवतापारमार्थ्यं तद्वेत्तीति तत्त्ववित् । तत्त्वविदुक्त्या स्वाभिप्रायपरिकल्पितदेवतापारम्यवादित्वव्युदासः । तर्हि तत्त्ववित्त्वे किं परमं वस्तु—सर्वस्मात् परं स्वापेक्षया परवस्तुशून्यं च निरुपाधिकसत्तायोगि किमित्यर्थः । का देवता परदेवतेति प्रश्नार्थः । वस्तुशब्दानुसारात् किमिति नपुंसकलिङ्गता । श्रुतिवैविध्यादयं प्रश्नः । तस्योत्तरं— विष्णुः इति । परमं वस्त्वित्यनुषज्यते । विष्णुरेव सर्वस्मात् परः । स्वापेक्षया पररहितश्च । अत्र च "विष्णुस्तदासीद्धरिरेव निष्कलः" इत्यनुवादत्वशङ्कयापि शून्यवाक्यविशेषस्फोरणाय विष्णुशब्दः प्रयुक्तः । कथमिति—अत्र विष्णुः परमं वस्त्वित्यनुषज्यते । श्रुतिवैविध्यदर्शनात् कथं विष्णोः पारम्यनिर्णय इति प्रश्नार्थः । तस्योत्तरं— तत्त्वेदंपरेति । इदंपरं तात्पर्यविषयभूतं यस्य तदिदंपरं, तत्त्वे देवतापारमार्थ्ये, इदंपरं तत्त्वेदंपरं, तथाविधतैत्तिरीयकं नारायणानुवाकरूपं मुखमादिर्येषां तथोक्तानां त्रय्यन्तानां पुरुषसूक्तसुबालोपनिषन्महोपनिषदादीनां, सन्दर्शनात्—षड्विधतात्पर्यलिङ्गोपेततया प्रमितत्वलक्षणसमीचीनदर्शनात् , विष्णुपारम्यनिर्णय इति प्रतिवचनार्थः ॥

तत्त्वेदंपरेत्यनेन उपासनविध्यन्यपरवाक्यव्यावृत्तिः । "शंभुराकाशमध्ये ध्येयः" इत्यादिकं ह्युपासनविधिपरं नोपास्यविशेषनिर्णयपरम् । नारायणानुवाकस्तु तदेकपर-

इति भावः । तदुक्तं भट्टसुदर्शनपादैः—"जुह्वा जुहोति" इति वाक्यस्य होमसाधनत्वमात्रपरत्वेन द्रव्यविशेषनिर्णये न तात्पर्यम्; "यस्य पर्णमयी जुहूः" इत्येतद्वाक्यस्य द्रव्यविशेषनिर्णयपरत्वेन तदनुगुणार्थत्वम् "जुह्वा जुहोति" इति वाक्यस्य भवति; तथा "शंभुराकाशमध्ये ध्येयः" इत्यादीनां वाक्यानामुपासनविधिपरत्वान्नोपास्यविशेषनिर्णयपरत्वम् । नारायणानुवाकस्य तु उपासनविध्यन्यपरत्वाभावादुपास्यविशेषनिर्णयैकपरत्वमस्ति । अतस्तदनुगुणार्थत्वम् "शंभुराकाशमध्ये" इत्यादिवाक्यानामभ्युपगन्तव्यम्" इति ॥

पृच्छति—अन्या इत्यादिना । तर्हि—भगवत एव परत्वे । अन्या गिरः कथम् "न सन्न चासच्छिव एव केवलः" "शंभुराकाशमध्ये ध्येयः" इत्यादीनि वाक्यानि कथं संगच्छन्त इति प्रश्नार्थः । शिवादिशब्दानां रूढिभङ्गापत्तेरिति भावः । तस्योत्तरं—गुणवशादिति । अत्र संगच्छन्त इति शेषः । अयोग्यार्थत्वरूपस्य रूढिभङ्गलिङ्गस्य सद्भावान्मङ्गलत्वसुखभावयितृत्वाद्यर्थान्तरसाधारण्याच्च कारणत्वशङ्कितदोषव्यावृत्तये अपेक्षितमङ्गलत्वादिगुणाधीना शिवादिशब्दानां भगवति वृत्तिरिति भावः । पृच्छति—अत्राहेत्यादिना । रुद्रः, अत्र—परत्वविषये, कथमाह—"नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्यादिकं पारम्यस्य स्ववृत्तित्वस्वेतरावृत्तित्वप्रतीतिकरं वाक्यं कथमाहेत्यर्थः । तस्योत्तरं—तद्दृष्टचेति । "सोऽन्तरादन्तरं प्राविशत्" इत्युक्तत्वेन प्रह्लादवामदेवादिवत् स्वशरीरकपरमात्मन एव स्वप्रयुक्ताहमादिपदजन्यबोधविशेष्यत्वा(त्वो)[चो]क्तपारम्यं तत्रैव भविष्यतीति बुद्ध्या रुद्रो "नान्यः कश्चित्" इत्यादिकमुक्तवानित्यर्थः । आहेत्युवाचेत्यर्थकमव्ययम् । ब्रवीत्यर्थकं लडन्तं वा । पृच्छति—कथमुद्भवतीति । अत्र विष्णुरित्यनुषज्यते । विष्णुः कथमुद्भवति—"ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इति वाक्योक्ता भगवदुत्पत्तिः कथं भगवत्पारम्ये संगच्छत इति प्रश्नार्थः । तस्योत्तरम्—अवतरतीति; विष्णुरिति वर्तते । "अजायमानो बहुधा विजायते" इति श्रुत्या भगवतो न कर्ममूलकं जन्म, किं तु इच्छयावताररूपमित्यर्थः । "ब्रह्मविष्णुरुद्रेन्द्राः" इत्यस्योपक्रमे "कश्च ध्येयः" इति ध्येयविधिपरत्वमवगतमिति कार्यत्वमनूद्यते । अनुवादश्च प्रापकानुरोधेन स्यात् । लक्ष्मीपतिविषय उत्तरनारायणे भगवदुत्पत्तिरवताररूपा श्रूयत इत्यस्मिन् वाक्ये भगवदवतारानुवादः । ब्रह्मशिवयोरवतारश्रुत्यभावादिन्द्रवरुणादितुल्योत्पत्तिरनूद्यत इति भावः पृच्छति—अन्यत् कथमिति । "ततो यदुत्तरतरम्" "तस्मिन् यदन्तः" इत्यादिकं

रुद्रादिनामनिर्वचनं भस्मद्रव्यविधानं चेत्येवमादि कथमुपपद्यत इति प्रश्नार्थः । तस्योत्तरं—नीयतामिति ; 'ततः' इत्यस्यावधिपरत्वाभावेन हेतुपरतया, "तस्मिन् यदन्तः" इत्यस्य "एतांश्च सत्यान् कामान्" इत्युक्तगुणाष्टकपरतया, रुद्रादिनामनिर्वचनस्योपरितनविद्याङ्गभूतप्रणवविषयतया, भस्मविधानस्य पशुपतिशरीरकभगवदुपासनाङ्गतया च नयनं युक्तमित्यर्थः ॥ (71)

* * * * *

[अव०] उक्तमर्थं चतुर्विंशतिश्लोक्या प्रपञ्चयति—[य उक्त इत्यादिना]

[मू०] य उक्तो याज्ञिक्यामुपनिषदि निस्सीममहिमा
स उक्तः पुंसूक्ते परमपुरुषः कारणतया ।
पुनः सौबालिक्यामुपनिषदि माहोपनिषदी
गतिश्चैवं तद्वत् कलय कठवल्लीप्रभृतयः ॥ (72)

[व्या०] याज्ञिक्यामुपनिषदि—तैत्तिरीयके । यो निस्सीममहिमा परमपुरुषः उक्तः । सः—परमपुरुषः । कारणतया, पुंसूक्ते पुरुषसूक्ते उक्त इत्यर्थः । "यमन्तस्समुद्रे विद्युतः पुरुषादधि," "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" "विश्वरूपाय ते नमः" "यः परः स महेश्वरः" "पुरुषस्य विद्मः सहस्राक्षस्य" इत्यादिना "सहस्रशीर्षम्" इत्यादिना च तैत्तिरीयकं भगवत्परमिति निश्चीयते । समुद्रशायित्वविद्युद्वर्णत्वलक्ष्मीपतित्वानां भगवल्लिङ्गत्वात्, विश्वरूपशब्दस्य च "विष्वक्सेनो विश्वरूपो मुरारिः शौरिः शार्ङ्गी पद्मनाभो मुकुन्दः" इति हलायुधकोशेन भगवति रूढ्यवगमात्, "अकारो विष्णुवाचकः" इत्यादिषु भगवद्वाचकतया प्रसिद्धेनाकारेण भगवन्तमनूद्य तस्य परमैश्वर्यविधानात् "पुरुषस्य विद्मः" इति भगवत्प्राप्तेरभिधानात्तदुपायतया "महादेवस्य धीमहि" इति, "शंकराज्ज्ञानमन्विच्छेत्" इत्युक्तरुद्रध्यानस्योक्तत्वाच्च । "यस्य पर्णमयी जुहूः" इति वाक्यस्य यथा "जुह्वा जुहोति" इति वाक्यविहितहोमसाधनस्य द्रव्यविशेषपरत्वम् ; तथा तत्तद्विद्योपास्यवस्तुविशेषनिर्णयपरत्वं नारायणानुवाकस्येति तैत्तिरीयकस्य भगवत्परत्वं सिध्यति । परमपुरुष इति—"यस्मात् परं नापरमस्ति किंचित्" इत्यादिवाक्य-

सिद्धार्थकथनम् । निस्सीममहिमेति—"स महेश्वरः" इत्यादिसिद्धार्थकथनम् । पुरुषशब्दस्य च भगवदसाधारण्यं श्रुतिस्मृतिकोशन्यायैः सिद्धम् । "पुरुषो वै रुद्रः" इत्येतत्तु पुरुषस्य भगवतो रुद्रशरीरकत्वपरम् ।

"मध्ये मेदं महाघोरं महाब्धेरम्भसि स्थितम् ।
ध्यात्वा प्रदोषकाले तु शिवसायुज्यमाप्नुयात् ॥"

इत्येतदपि तामसत्वान्न ग्राह्यम् । श्रुतिप्रसिद्धस्यैव संभवे तस्यैव ग्राह्यत्वात् । तस्य ध्यानशेषतया तथात्वासिद्धेश्च । अतः समुद्रशायित्वादिभिस्तैत्तिरीयकं भगवत्परम् । नारायणानुवाकार्थप्रत्यभिज्ञानात् पुरुषसूक्तमपि भगवत्परम् ।

"श्रुतिस्मृतिसमाख्यानविनियोगोपबृंहणैः ।
सूक्तस्य पौरुषस्यास्य भगवत्परतां विदुः ॥"

इत्युक्तदिशा श्रुत्यादिभिः पुरुषसूक्तं भगवत्परमिति सिद्धम् । विस्तरस्तु वेदान्तविजयादिपूर्वाचार्यग्रन्थेष्वनुसन्धेयः । तत्र च भगवतः कारणत्वम् "तस्माद्विराडजायत" इत्यादिभिरुक्तम् । तदिदमत्रोक्तम्—स उक्तः पुंसूक्ते परमपुरुषः कारणतया—इति ॥

**सौबालिक्यामुपनिषदि**—सुबालोपनिषदि । परमपुरुषः कारणतयोक्त इत्यनुषज्यते । पुनश्शब्दस्तु पुरुषसूक्तोक्तिक्रियामपेक्ष्य सुबालोपनिषदुक्तिक्रियावृत्तिपरः । सुबालोपनिषदपि सहस्रशीर्षपुरुषादिपदयोगाद्भगवत्परैवेत्यर्थः । **माहोपनिषदी गतिश्चैवं**—महोपनिषदस्तत्त्वप्रतिपादनरीतिश्चोक्तप्रकारेण भगवत्पारम्यावलम्बिनीत्यर्थः । "एको ह वै नारायण आसीत्" इत्यनन्यसाधारणनारायणशब्देन विशेषविधानाद्भगवत एव कारणत्वं वदतीत्यर्थः । **कठवल्लीप्रभृतयस्तद्वत्** कठवल्ल्यादयोऽपि भगवत्पारम्यपरा इत्यर्थः । कठवल्ल्याम् "सर्वे वेदा यत्पदमामनन्ति" इत्युपक्रम्य "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्युक्तेः कठवल्ल्यपि भगवत्परा । प्रभृतिशब्देन मैत्रायणीयादिश्रुतयो विवक्षिताः । एवम् "सवितुर्वरेण्यं ध्रुवमचलममृतं विष्णुसंज्ञं सर्वाधारं धाम" इति ध्रुवत्वाचलत्वादिविशिष्टतया वेदान्तोदितस्य वस्तुनो विष्णुसंज्ञत्वं विधीयत इति मैत्रायणीयश्रुतिर्भगवत्परा । "अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेय" इत्यादिका नारायणोपनिषत्, "अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेय" इति "अथापः ससर्ज" इत्यादिका महानारायणोपनिषत्, "एको नारायण आसीत् न ब्रह्मा न शंकरः" इत्यादिकं पैङ्गिरहस्यं च प्रभृतिशब्दग्राह्याणि । (कलय)—

तैत्तिरीयकपुरुषसूक्तसुबालोपनिषत्कठवल्लीप्रभृतयो भगवत्कारणत्वपरा इति कलय जानीहीति कस्त्वमिति पृष्टवन्तं जिज्ञासुं प्रति स्वोक्तार्थस्य श्रद्धेयत्वद्योतनाय विधिः । "पश्य मृगो धावति" इत्यत्रेव वाक्यार्थस्य कर्मत्वम् ॥ (72)

* * * *

[ अव० ] ननु का महोपनिषद्गतिरित्यत्राह—[व्याजह्रे इत्यादि]

[ मू० ] व्याजह्रे जगदेककारणतया साकूतमेको ह वा
इत्यारम्भवता महोपनिषदुद्घोषेण नारायणः ।
ब्रह्मेशद्युवसुन्धरोडुसलिलस्वाहेशसोमांशुम-
त्पूर्वाशेषजगत्प्रणाशयति यः काले समुन्मीलति ॥ (73)

[ व्या० ] **नारायणः**—"आपो नारा इति प्रोक्ताः" इत्यादिना मनुस्मृतिनिरुक्तत-द्विपरीतनिर्वचनोत्प्रेक्षानर्हानितरसाधारणाभिधानको भगवान् । **साकूतं**—साभिप्रायम् । "**एको ह वा**" **इत्यारम्भवता**—"एको ह वै नारायण आसीत्" इत्यादिना । **महोपनिषदुद्घोषेण**—विस्पष्टाधीतेनापलापानर्हेण स्फुटार्थकेन महोपनिषद्वाक्येन । **जगतः, एककारणतया** एकमभिन्ननिमित्तोपादानत्वेन सजातीयद्वितीयरहितं यत्कारणं तत्त्वेन । **व्याजह्रे**—व्याहृतः ।

"सदेव सोम्येदमग्र आसीत्" इति सद्विद्यायां सतः कारणत्वं प्रतिपन्नम् । "ब्रह्म वा इदमेकमेवाग्र आसीत्" इति तदेव सद्ब्रह्मत्वेन विशेषितम् । इदमेकमेव अग्र आसीदित्यनुवादः, ब्रह्मेति विधिः । तथा "आत्मा वा इदमेक एवाग्र आसीत्" इति तदेवात्मत्वेन विशेषितम् । अत्रापि आत्मेति विधिः, इदमित्यादिरनुवादः । तथा एतदेव महोपनिषदि "एको ह वै नारायण आसीत्" इति नारायणत्वेन विशेषितम्, अत्रापि नारायण इति विधिः, एक इत्यादिरनुवादः । अत्र च सर्वशाखाप्रत्ययन्यायेन, सामान्यविशेषन्यायेन च सर्वेषां कारणवाक्यानां भगवत्येव पर्यवसानाद्भगवानेव कारणमिति महोपनिषदादिभ्योऽवगतमित्यर्थः । हिरण्यगर्भादयः शब्दा आकाशप्राणादिशब्दवद्योग्यार्थाः । शिवादिशब्दाश्च बहुष्वर्थेषु प्रयोगात् साधारणा इति सदादिशब्दवन्न विशेषोपस्थापनक्षमाः । अतो नारायणशब्द एव योग्यविशेषैकस्वार्थक इति तमेव निर्दिशतीति श्रुत्यभिसन्धिः साकूतमित्यनेनोक्तः ॥

किं च " यः परः स महेश्वरः " इत्यत्र हि अकारवाच्यत्वप्रसिद्ध्यनुरोधेन ' यः परः ' इति भगवन्तमनूद्य महेश्वरशब्दरूढ्यर्थविवक्षायां निर्ज्ञातभेदयोरभेदासंभवात्, रुद्रशरीरकत्वस्य च विशिष्यात्र विधाने प्रयोजनाभावात्, महेश्वरशब्दस्य च योगार्थविवक्षयान्यत्र प्रचुरप्रयोगदर्शनात्, विशिष्यैव भगवति प्रयोगप्राचुर्यदर्शनाच्च निरतिशयैश्वर्यलक्षणमहागुणो महेश्वरशब्देन विधीयत इति युक्तम्। अत्र तु सदादिशब्दोक्तसामान्यस्य व्यक्तिविशेषपर्यवसानाकाङ्क्षित्वात्, नारायणशब्दस्य च रूढ्यर्थेन विना क्वचिदपि प्रयोगादर्शनाद्भगवत एव च सर्वशरीरकत्वेनान्तर्यामिब्राह्मणादिषु उक्तत्वेनापर्यवसानवृत्त्यापि कस्यचित् प्रतिपाद्यत्वासंभवात्, " एको ह वै नारायण आसीत् " इत्यत्र नारायणशब्देन सदादिशब्दोक्तवस्तुनि तादात्म्येन परमकारणत्वयोग्यनारायण एव विधीयते। अतः कारणत्वस्य नारायणत्वव्याप्यत्वान्नारायणादन्यस्य न कारणत्वसंभव इत्ययमभिप्रायश्च साकूतमित्यत्र विवक्षितः। अर्थप्राप्तिवशादेवास्य विधित्वोपपत्तेः न ' ह वै ' शब्दमात्रेणास्यानुवादत्वापत्तिरित्यभिप्रायो वा साकूतशब्देनोक्तः। अस्यैव त्वभिप्रायस्य उद्घाटनमुत्तरश्लोकेन क्रियत इति न पुनरुक्तिः। कारणवस्तुनो नारायणत्वविधानेऽपि समानसंवित्संवेद्यतया ( नारायणस्य कारणत्वसिद्धा ) जगदेककारणतया नारायणो व्याजह्रे [ इत्यपि सुवचमेव ] ( इत्युक्तम् ) ॥

[ अत्र च यच्छब्दः " वीरप्रसूर्जगति भार्गवरेणुकेव या त्वां त्रिलोकतिलकं सुतमसूत " इत्यादाविव तच्छब्दमभ्या काङ्क्षत इति भावः ] (अत्र चोत्तरयच्छब्दस्य तच्छब्दनिरपेक्षत्वान्न तच्छब्दाध्याहारः ) यः, काले प्रलयारम्भकाले। समुन्मीलति — स्वसंकल्पमेलनलक्षणसामीचीन्ययुक्तोदयवति सति। प्रधानकारणवादे तु प्रलयकालाव्यवस्थेति समित्यस्य भावः। ब्रह्मा — चतुर्मुखः, ईशो रुद्रः, द्यौराकाशः, वसुन्धरा भूमिः, उडूनि — नक्षत्राणि, सलिलम् आपः, स्वाहा — वह्निप्रिया, तस्या ईशोऽग्निः, सोमः चन्द्रः, अंशुमान् सूर्यः, ( पूर्वे आदयो ) [ पूर्वे प्रधाना ] यस्य तत्तथोक्तं च तदशेषं च तज्जगच्चेति विग्रहे ( कर्मधारया ) द्वितीया। प्रणाशयति प्रलीनं करोति। नारायणः कारणतया व्याजह्रे स एव जगत्प्रलयकर्तेत्यर्थः। अत्रोत्तरार्धम् " न ब्रह्मा नेशानो नेमेद्यावापृथिवी न नक्षत्राणि नापः " इत्यादिमहोपनिषद्गतवाक्यार्थकथनपरम्। अतश्चतुर्मुखेशानादीनां संहार्यत्वादिप्रतीतेस्तेषां जगत्कारणत्वासंभवाद्धिरण्यगर्भादिशब्दानां योगेनापर्यवसानवृत्त्या वा नारायणशब्दोक्तविशेष एव पर्यवसानमिति भावः ॥ (78)

* * * *

[ अव० ] आकूतमुद्घाटयति—[ अप्राप्तत्वादित्यादि ]

[ सू० ] अप्राप्तत्वान्महत्यामुपनिषदि जगत्कारणस्यानुवादो
न स्यादेको ह वा इत्ययमुपरि हि देवेभ्य इत्यादिनीत्या ।
वाक्यस्वारस्यतो हि व्यगणि भगवतः कारणत्वं परेषां
कार्यत्वं चाविरुद्धं तदपि न परमस्त्यत्र किंचिद्विधेयम् ॥ (74)

[ व्या० ] जगत्कारणस्याप्राप्तत्वात्—सदादिशब्दोक्तकारणवस्तुनो नारायणताया वाक्यान्तरानवगतत्वात् । महत्यामुपनिषदि महोपनिषदि । एको ह वा इत्ययम् "एको ह वै नारायण आसीत्" इत्ययमंशः । उपरि हि देवेभ्य इत्यादिनीत्या "उपरि हि देवेभ्यो धारयति" "यदाग्नेयोऽष्टाकपालः" इत्यादिवाक्येषु "वचनानि त्वपूर्वत्वात्" "विधिस्तु धारणेऽपूर्वत्वात्" इति सूत्राभ्यां निर्णीतेन, यच्छब्दहिशब्दाद्यनुवादत्वसूचकशब्दयोगेऽपि अर्थस्य मानान्तरानधिगतत्वेन वाक्यस्य विधित्वमेव नानुवादत्वं, यत्र त्वर्थस्य मानान्तरावगतिः तत्र तु प्रयुक्तशब्दानां प्रमाणान्तरप्राप्तानुवादत्वसूचकतया गतिचिन्तनमिति न्यायेन । अनुवादो न स्यात्—अनुवादत्वानर्ह इत्यर्थः । ननु अप्राप्तत्वं हि साधकबाधकमानान्तरागोचरत्वम् ; तत्र साधकप्रमाणाविषयत्वेऽपि बाधकप्रमाणसद्भावान्न विधिः ; 'न सन्न चासच्छिव एव' इति हि विधित्वभञ्जकं विद्यत इत्यत्राह—वाक्येत्यादि । अविरुद्धं—प्रमाणान्तराप्रतिषिद्धम् । भगवतो नारायणस्य । कारणत्वं, वाक्यस्य स्वारस्यम् 'अप्राप्ते शास्त्रमर्थवत्' इति विधित्वस्य स्वतःप्राप्तत्वरूपम् तेन, व्यगणि हि विहितं खलु । तथा, परेषां ब्रह्मेशानादीनाम् । अविरुद्धं मानान्तराप्रतिषिद्धम् । कार्यत्वं च वाक्यस्वारस्यतो व्यगणि हि । अतः प्रमाणान्तराबाधितत्वाद्विधित्वमित्यर्थः । शिवशब्दस्य तु साधारणत्वात् सदादिशब्दवन्न विधित्वभञ्जकत्वमिति भावः । एवमर्थस्थितिरुक्ता ; 'ह वै' शब्दस्य विधित्वभञ्जकतामभ्युपगम्याप्याह—तदपीत्यादि ; तदपि तथापि, हवैशब्दस्य विधित्वभञ्जकत्वेऽपि । अत्र परम् "एको ह वै नारायण आसीत्" इति वाक्ये तु । विधेयं किंचिदपि नास्ति "विष्णुस्तदासीद्धरिरेव निष्कळः" इति स्वसमनार्थवाक्यान्तरविहि-

तार्थानुवादकत्वमस्योपपन्नम् । न तु विभिन्नायोग्यार्थकसाधारणशिवादिशब्दयुक्त-वाक्योक्तार्थानुवादकत्वमित्यर्थः ॥

अत्र परमित्यनेन यदाग्नेयादिवाक्येषु अर्थाप्राप्तिवशाद्विधित्वेऽपि, "एको ह वै नारायण आसीत्" इत्यस्यानुवादकत्वमुपपन्नमिति यदाग्नेयादिवाक्यवैषम्यं सूच्यते। तदिदमनुगृहीतं वेदार्थसंग्रहतात्पर्यदीपिकायां भट्टसुदर्शनपादैः—"नन्वेको ह वै नारायण आसीत्" इत्यत्रानुवादकत्वसूचकहवैशब्दश्रवणात्, "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति वाक्यवदिदमपि वाक्यमनुवादपरमिति वाक्यान्तरसापेक्षम् । तत्र 'तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम्' इति विधित्व-सूचकैवकारवता "न सन्न चासच्छिव एव केवलः" इति वाक्येनोक्तः जीव एवानूद्यते" इति । अत्रोच्यते—"अप्राप्ते हि शास्त्रमर्थवत्" इति न्यायेन स्वतः प्राप्तस्य विधित्वस्य हवैशब्दो न भञ्जकः । "यदाग्नेयोऽष्टाकपालः" इत्यत्र "यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्" इत्यनुवादसूचकयच्छब्दसद्भावेऽपि "वचनानि त्वपूर्वत्वात्" इति सूत्रेण विधित्वं स्थापितम् । प्रमाणान्तराप्राप्त-त्वात्तथा "उपरि हि देवेभ्यो धारयति" इत्यत्र हिशब्दे सत्यपि "विधिस्तु धारणेऽपूर्वत्वात्" इति सूत्रेण विधित्वं स्थापितम् । तस्मान्न स्वतःप्राप्तविधित्वभञ्जको हवैशब्दः, अपि तु प्रमाणान्तरेण विधित्वे भग्ने प्रयुक्तशब्दस्य गतिप्रदर्शकः । आकाशकारणत्ववाक्ये तु अयोग्यत्वादिना विधित्वभङ्गात् हवैशब्दोऽनुवादरूपताज्ञापकः । अत्र तु प्रमाणान्तराप्राप्तत्वाद्विधित्वभञ्जकाभावाच्च हवैशब्दो न स्वतः प्राप्तविधित्वभञ्जकः । शिव एवेत्यनेन विधित्वभङ्ग इति चेन्न । "शिवास्ते सन्तु पन्थानः" "शिवं कर्मास्तु" "शिवः शिवानामशिवः शिवानाम्" इत्यादिष्वर्थान्तरपरत्वदर्शनेन, शिव-शब्दस्य साधारणत्वात्; साधारणोऽपि विधित्वभञ्जकश्च सदेवेत्यादिशब्दाच्छिव एवेत्या-दिवाक्यस्यानुवादता स्यात् । किं चानुवादरूपत्वमस्तु; तथापि "विष्णुस्तदासीद्धरिरेव निष्कळः" इत्यादिस्वसमानार्थवाक्यश्रवणात्तदनुवादित्वमेवेति न विरुद्धार्थपरवाक्यानु-वादित्वम्" इति ।

**यद्वा भगवतः कारणत्वं परेषां कार्यत्वं च वाक्यस्वारास्यतो व्यगणि** हि, तदपि भगवतः कारणत्वं परेषां कार्यत्वं च—अविरुद्धं मानान्तराविरोधाद्विधानार्ह-मित्यर्थः । न केवलं स्वारस्याविरोधाभ्यां विधानार्हत्वं, किं त्वस्मिन् विधेयान्तराभावादपि भगव-त्कारणत्वमेव विधेयमित्याह—**न परमस्त्यत्र किंचिद्विधेयमिति** । विधित्वस्य स्वतः,

प्राप्तत्वात्, हवैशब्दस्य विधित्वभञ्जकत्वाभावात्, भगवत्कारणतायाः प्रमाणान्तरानवगतत्वात्, चतुर्मुखादीनां कार्यत्वस्य च मानान्तराविरुद्धत्वात्, भगवत्कारणत्वस्य च मानान्तराविरुद्धत्वात्, अस्मिंस्तु वाक्ये विधेयान्तराभावाच्च भगवत्कारणत्वं विधेयमेवेति भावः। उपासनविध्यन्यपराणि अन्यानि त्वेतदनुरोधेन नेयानीति हृदयम् ॥ (74)

* * * *

[ अव॰ ] नन्वस्तु भगवतः कारणत्वम्। कारणभूतस्यैव भगवतो नारायणस्याकाशशब्दवाच्यतयाप्रसिद्धस्यान्तर्वर्ती कश्चन तत्त्वविशेषो मुमुक्षूपास्यतया छान्दोग्ये श्रुतः। "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वावविजिज्ञासितव्यम्" इत्यस्याकाशस्य नामरूपयोर्निर्वोढृत्वश्रवणात्, पुरुषसूक्ते पुरुषस्य नामरूपयोः कर्तृत्वदर्शनाच्च, आकाशपर्यायभूतात् पुरुषादन्यस्यान्वेष्टव्यतयोपास्यत्वं प्रतीयत इतीमं व्योमातीतवादं प्रतिक्षिपति—[ यदित्यादि ]

[ मू॰ ] यत्संज्ञामूर्तिकर्तुः परमपुरुषतः किंचिदाकाशनाम्नो
हृत्पद्मे स्यादुपास्यं श्रुतिशिरसि परं सामगानामगायि।
तत्र प्रश्नोत्तराभ्यामघविहतिमुखान् सत्यसंकल्पतान्तान्
नष्टौ शिष्टांस्तदीयाननिदमुदयिनस्तद्गुणानुद्गृणन्ति ॥ (75)

[ व्या॰ ] सामगानां श्रुतिशिरसि परं—छान्दोग्ये त्वित्यर्थः। तैत्तिरीयादेरपि व्योमातीतपरत्वाश्रयणे मूलं छान्दोग्यमेवेति पराभिमानसूचनाय, तुशब्दार्थकस्य परमित्यस्य निर्देशः। परमित्येतद्भिन्नक्रमतया परमपुरुषतःपरमिति वा योजनीयम्। आकाशनाम्नः—आकाशनामकात्, संज्ञामूर्तिकर्तुः—नामरूपकारकात्। अत एव परमपुरुषतः आकाशकर्तृकतया श्रुतयोर्नामरूपयोः कर्तृतया पुरुषसूक्तोक्तात् परमपुरुषात्, परम् अन्यत्। किंचित्—एकम्। यत् हृत्पद्मे हृदयपुण्डरीके। उपास्यं स्यादित्यगायि—अन्वेष्टव्यतया विहितम्। गायतेः कर्मणि लुङि चिण्। "तदन्वेष्टव्यम्" इति श्रुतौ तव्यप्रत्ययानुसारेणास्तिक्रियाया लिङन्तपदाध्याहार उचित

इति प्रदर्शनाय स्यादित्युक्तम् । एवं "अथयदिदम्" इत्यादिवाक्ये शङ्काहेतुभिः सह परशङ्कितार्थस्य धर्मी निर्दिष्टः । अथ तस्य धर्मिणः परोक्ततत्त्वविशेषत्वं न संभवति ; किं तु 'तस्मिन् यदन्तः' इति गुणजातमुच्यत इत्याह—तत्रेत्यादिना । तद्गुणानित्यत्र तदिति गुणानिति पदद्वयम् । अन्यथा तदीयानित्यनेन पौनरुक्त्यापत्तेः । पूर्वयच्छब्दस्य तच्छब्दापेक्षानियमेन तच्छब्दाध्याहारापत्तेश्च । तदिति च द्वितीयान्तम् । यदगायि, तत् कर्म । गुणान् उद्गृणन्ति गुणत्वेन वदन्तीत्यर्थः । श्रुतिसूत्रकारवाक्यकारांस्तदनुसारिणोऽस्मदाचार्यांश्चेत्यादिः । तत्र—छान्दोग्ये । प्रश्नोत्तराभ्याम् "किं तदत्र विद्यते" इति चोद्यगर्भप्रश्नेन "यावान् वा अयमाकाशः" इत्यादिना तत्परिहारगर्भेण उत्तरेण च । अघविहतिमुखान्—अपहतपाप्मत्वादीन् । सत्यसंकल्पतान्तान्—सत्यसंकल्पत्वपर्यन्तान् । शिष्टान्—"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" "एतांश्च सत्यान् कामान्" "अस्मिन् कामास्समाहिताः" इत्यादिभिर्बोधितान् । तदीयान्—दहराकाशभूतपरमपुरुषीयान् । अनिदमुदयिनः अस्मिन् काले उदयिन आविर्भाववन्त इदमुदयिनः ते न भवन्तीत्य निदमुदयिनो नित्याविर्भूतान् । अष्टौ गुणानुद्गृणन्ति, ('तस्मिन् यदन्तः' इति निर्दिष्टं धर्मिणं दहराकाशभूतपरमपुरुषगुणगण) ['तस्मिन् यदन्तः' इति निर्दिष्टस्यधर्मिणो दहराकाशभूतपरमपुरुषस्य गुणगणः] इति वदन्तीत्यर्थः । अतो न तत्त्वविशेषस्योपास्यत्वप्रसक्तिरिति भावः ॥

तत्रत्यप्रश्नप्रतिवचनविवरणं च महाचार्यैः कृतम्—"तं चेत् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्" इति चोद्यगर्भ एवायं प्रश्नः । अन्यथा यदिदमित्याद्यनुवादवैयर्थ्यात् । अतः सूक्ष्मत्वाद्दहराकाशे किं वर्तितुमर्हतीति प्रश्नाभिप्रायः । एवं सति किमिति स्वरसतः प्रतीयमानधर्मिप्रश्नरूपताप्युज्जीविता । "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इति हेत्वसिद्ध्या चोद्यस्य परिहार उक्तः । तावानित्युक्त्या परिच्छेदशङ्कायाम् "उभे अस्मिन् द्यावापृथिवी" इत्यादिना सर्वाधारत्वोक्त्या पूर्ववाक्यस्यापरिच्छेदे तात्पर्यं व्यञ्जितम् । एवं चोद्ये निरस्ते "अस्मिन् कामाः समाहिताः" इति प्रश्नस्योत्तरमुक्तम् । अनन्तरम् "एष आत्मापहतपाप्मा"

इत्यादिना कामान् विवृत्य " अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् " इति सत्यपदेन द्यावापृथिव्यादयो व्यावर्तिताः " इति ॥

अपहतपाप्मत्वनिष्कर्षश्च भट्टसुदर्शनपादैः अनुगृहीतः । " क्षेत्रज्ञेषु प्रत्यवायकरपापसजातीयानां कर्मणां स्वलीलाकृतानामपि फलजननशक्तिप्रतिभटत्वं नाम कश्चिदयमीश्वरस्य स्वभावविशेषः । परिशुद्धात्मविषयस्याप्यपहतपाप्मशब्दस्यायमेवार्थः । स तु तस्य तिरोधानार्हः । प्रतिबन्धकनिवृत्तावाविर्भवति । ईश्वरस्य तिरोधानानर्हो नित्याविर्भूत इति विशेषः " इति ॥

तदिदं परिष्कृतमद्वैतविद्याविजयव्याख्यायां वीरराघवगुरुभिः—" नित्यसिद्धं चापहतपाप्मत्वं व्यधिकरणानवच्छिन्नविषयतासंबन्धावच्छिन्नप्रतियोगिताकः पाप्माभावः । तस्य चाविर्भावतिरोभावौ प्रतियोगिसामानाधिकरण्यतदसामानाधिकरण्ये । अथवा अपहतपाप्मत्वं पापकारणसमवधानकालीनपापानुत्पादप्रयोजकीभूतधर्मः । तस्याविर्भावः प्रयोजकतावच्छेदकधर्मवैशिष्ट्यम् । निरुक्तानुत्पादप्रयोजकं हि चरमदेहवियोगप्राक्कालावच्छिन्नेश्वरीयबन्धसंकल्पविषयताभावविशिष्टात्मत्वम् । अन्यथा मुक्तावश्लेषानुपपत्तेः । न च विद्यया तदुपपत्तिः । तस्याः प्रामादिकाघाश्लेषमात्रप्रयोजकत्वात् । नित्येश्वरसाधारण्याच्च । निरुक्तानुत्पादस्य चाचेतने भावान्न विशेष्यवैयर्थ्यम् । सत्यसंकल्पत्वं च स्वविषयोत्पादे प्रयत्नान्तरानपेक्षपरिणामयोग्यद्रव्याश्रयत्वम् । तच्च द्रव्यं सङ्कल्पज्ञानमेव तस्य चाविर्भावस्तादृशावस्थावैशिष्ट्यम् " इति ॥

अनिदमुदयिन इत्यनेनोपरितनप्रजापतिवाक्योक्त[जीवीया](जीविया) पहतपाप्मतादिव्युदासः । ते ह्यत्र तिरोहिताः । अष्टाविति च प्रदर्शनार्थं द्युपृथिव्यादिस्रष्टृत्वधारकत्वादिगुणगणस्य । तदुक्तं वेदार्थसङ्ग्रहतात्पर्यदीपिकायां भट्टसुदर्शनपादैः—" उक्तद्युपृथिव्यादीनां स्रष्टृत्वधारकत्वादिगुणगणोऽपहतपाप्मत्वादिगुणगणश्च विवक्षित इत्यर्थः " इति । श्रुतिरुक्ता । "[1] कामादीतरत्र तत्र चायतनादिभ्यः " इति सूत्रम् । वाक्यकारश्च " तस्मिन् यदन्तः" इति कामव्यपदेश इत्याह । " काम्यन्त इति कामाः अपहतपाप्मत्वादयो गुणा इत्यर्थः " इति भगवद्भाष्यकाराः । अतः श्रुतिसूत्रकारवाक्य-

---

1 शा-मी-३-३-३८,

कारभगवद्भाष्यकाराः 'तस्मिन् यदन्तः' इत्यन्तरवस्थितं न तत्त्वान्तरम्; किं तु परमपुरुषगुणगण इति वदन्तीत्यर्थः । 'तस्मिन् यदन्तः'इति दहराकाशमात्रमुच्यत इति पक्षः प्रतिक्षिप्तः पूर्वम् " अस्वारस्यचतुष्टयम् " इत्यादिना । अत्र तु दहराकाशान्तर्वर्तिनस्तत्त्वविशेषत्वं निरस्तमित्यपौनरुक्त्यम् । उद्गृणन्तीति ग्रशब्द इति क्र्यादौ पठितस्य बहुवचने श्नाप्रत्यये च सति रूपम् ॥ (75)

*　*　*　*　*

[ अव० ] श्वेताश्वतरश्रुतेरधिकवस्तुपरत्ववादं निराचष्टे—[ प्रस्तुत्येत्यादि ]

[ मू० ] प्रस्तुत्यामृतहेतुमादिपुरुषं न्यक्कृत्य मार्गान्तरं
तस्यैतद्घटनाय निष्प्रतिभटामुद्घुष्य सार्वेश्वरीम् ।
उक्तिस्तत्र ततो यदुत्तरतरं तन्मुक्तिदायीति या
तच्छ्वेताश्वतरागमे निगमनं प्रोक्तस्य हेतूक्तिमत् ॥ (76)

[ व्या० ] अत्रायं प्रकृतोपयुक्तश्वेताश्वतरोपनिषद्गतवाक्यसंदर्भः—

" वेदाहमेतं पुरुषं महान्तम् ।
आदित्यवर्णं तमसः परस्तात् ॥

तमेव विदित्वातिमृत्युमेति ।
नान्यः पन्था विद्यतेऽयनाय ॥

यस्मात्परं नापरमस्ति किञ्चित् ।
यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ॥

वृक्ष इव स्तब्धो दिवि तिष्ठत्येक
स्तेनेदं पूर्णं पुरुषेण सर्वम् ।
ततो यदुत्तरतरं तदरूपमनामयं
य एतद्विदुरमृतास्ते भवन्ति ॥

अथेतरे दुःखमेवापियन्ति ।
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ॥

सर्वव्यापी स भगवांस्तस्मात् सर्वगतः शिवः ।
महान् प्रभुर्वैपुरुषः सत्त्वस्यैष प्रवर्तकः ॥" इति ॥

अत्र "यस्मात् परं नापरमस्ति किंचित्" इति वाक्ये पुरुषात् परनिषेधो वक्ष्यमाणपरव्यतिरिक्तिविषयः । "ततो यदुत्तरतरम्" इत्यत्र तु पूर्वप्रस्तुतात् पुरुषाद्य-दुत्तरतरं परं शिवात्मकंवस्त्वित्यर्थः । "तस्मात् सर्वगतः शिवः" इति वक्ष्यमाणत्वादिति पूर्वपक्ष्यभिमतोऽर्थः ॥

सिद्धान्ते तु महापुरुषत्वादित्यवर्णत्वतमसःपरत्वादिश्रवणाद्भगवतो मोक्षोपायत्व-मन्यस्य त्वतथात्वं च "वेदाहम्" इत्यादिनोच्यते । तदुपपादनाय च "यस्मात् परम्" इत्यादिना परमपुरुषस्य समाभ्यधिकराहित्यमुच्यते । यस्मात् परं यस्मादन्यत् किंचिदपि परं नास्ति । केनापि प्रकारेण पुरुषव्यतिरिक्तस्य परत्वं नास्तीत्यर्थः । "यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति पुरुषव्यतिरिक्तस्य कस्यापि ज्यायस्त्वं सर्वेश्वरत्वं नास्तीत्यर्थः । ततो यदुत्तरतरेत्यादि । यतः पुरुषतत्त्वमेवोत्तरतरं ततः तस्माद्धेतोः—यदुत्तरतरं तदरूपमनामयं—कर्मकृतदेहतत्कृतदुःखविरोधि एतद्ये विदुस्ते मुक्ता भवन्ति इतरे—एतद्वेदनशून्यास्तु दुःखमेव प्राप्नुवन्तीत्यर्थः । अनेन च पुरुषवेदनस्यामृतत्वहेतुत्वं तदितरस्यानुपायत्वं च उपक्रमे प्रतिज्ञातं सहेतुकमुपसंह्रियते । प्रतिज्ञाया हेतुसाकाङ्क्षत्वात्, तत इत्यस्य हेतुपरत्वमेवोचितम् । पुरुषेणेति तृतीयान्त-पदनिर्दिष्टस्य शाब्दप्राधान्यरहितस्य तत्पदेन परामर्शश्चास्वरसः । समाभ्यधिकराहित्य-रूपस्य तु वाक्यार्थस्य प्राधान्यात्तत्पदेन परामर्शार्हत्वं हेतुत्वं चोपपन्नम् । एवं च तत इत्यस्य हेत्वर्थकत्वस्वारस्येनावध्यर्थकत्वाभावादस्मिन् वाक्ये पुरुषात् परस्य कस्यचि-द्विधानाभावेन नेदं वाक्यं यस्मात् परं नापरमित्युक्तपरनिषेधसङ्कोचकं भवितुमर्हतीति ॥

तदिदमाह—प्रस्तुत्येत्यादिना । श्वेताश्वतरागमे आदिपुरुषं कारणभूतं भगवन्तम् । अमृतहेतुं प्रस्तुत्य मोक्षोपायत्वेनोपक्रमे(ति) प्रतिपाद्य तस्य—अमृतस्य । मार्गान्तरम्—उपायान्तरम् । न्यक्कृत्य—निषिध्य । "दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः" इतिवद्वृत्त्यर्थैकदेशस्यापि तत्पदेन परामर्शः । एतद्घटनाय—भगवदुपायत्वे-तरानुपायत्वयोरुपपादनाय परान्तरसद्भावे हि तस्याप्युपायत्वं स्यादिति भावः । निष्प्रति-भटाम्—असंकुचितमप्रायिकीमिति यावत् । सार्वेश्वरीम्—सर्वेश्वरत्वम् । सर्वेश्वर-त्वाद्भावे ष्यञः षित्वात् ङीष् । उद्घुष्य—स्फुटं प्रतिपाद्य । सार्वेश्वरीमित्येतावदुक्तौ

प्रायिकत्वबुद्धिः स्यादिति निष्प्रतिभटामित्युक्तम् । अनेन च श्रुतिस्थकिंचित्कश्चिच्छब्द-लब्धार्थोऽनूद्यते । अत्र पूर्वार्धे प्रथमपादेन "वेदाहमेतम्" इत्यादेरर्थोऽनूदितः । द्वितीयपादेन तु "यस्मात् परं नापरम्" इत्यादेरर्थ उक्तः । तत्र—श्वेताश्वेतरे । ततो यदुत्तरतरमिति या उक्तिः (तदुत्तरशब्दोक्तम् ,) मुक्तिदायि मोक्षप्रदमिति च या उक्तिः एतदर्थिका "य एतद्विदुरमृतास्ते भवन्ति" इत्युक्तिश्च । एकोऽप्ययमिति शब्दः सामर्थ्यात् स्वरूपपरोऽर्थपरश्च भवति । "ततो यदुत्तरतरम्" इति वाक्यरूपाया उक्तिर्भवति तत्—सा उक्तिः । निगमनमिति विधेयवशात् क्लीबत्वम् । प्रोक्तस्य प्रारम्भे उक्तस्य । उपक्रमोक्तभगवदुपायत्वान्यानुपायत्वरूपार्थस्य, हेतूक्तिमन्निगमनम्—हेतुकथनसहितोपसंहारो भवति । मोक्षोपायत्वीयभगवदसाधारण्यनिरूपितं यद्भगवदीयनिस्स-माभ्यधिकत्वनिष्ठं ज्ञापकत्वरूपं हेतुत्वं तदुक्तिपूर्वकोऽयं भगवदुपायत्वान्यानुपायत्वयो-रुपसंहारः क्रियत इत्यर्थः । अतोऽधिकवस्तुवादस्य नात्रावकाश इति भावः । तदिदं सूत्रितम् "तथान्यप्रतिषेधात्" इति ॥ (76)

* * * *

[अव०] "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः"

इति वाक्यस्थशिवशब्दस्य भगवत्परत्वमुपपादयति—[यदित्यादि]

[मू०] यच्छ्वेताश्वतरागमो भगवति स्पष्टप्रयोगान्तरं
तस्मिन्निर्दिशति ध्रुवं शिवपदं प्रक्रान्तमुक्तिप्रदे ।
सर्वव्यापिनि सर्वतोमुखशिरोग्रीवे स एव प्रभुः
सत्त्वस्यैष महान् प्रवर्तक इति व्यक्तः पुनः पूरुषः ॥ (77)

[व्या०] श्वेताश्वतरागमः श्वेताश्वतरस्थसर्वाननेत्यादिवाक्यं कर्तृ । यत् शिवपदं निर्दिशति 'तस्मात् [सर्वगतः] शिव' इत्यत्रत्यं यच्छिवपदं प्रयुङ्क्ते । यत्तदो-र्नित्यसंबन्धात् तदित्यध्याहारः । तत्, भगवति नारायणे । स्पष्टप्रयोगान्तरं 'शाश्वतं शिवम्' इति निस्संशयं प्रयुक्तम् । अन्यः प्रयोगः प्रयोगान्तरं मयूरव्यं सकादित्वात् समासः । स्पष्टं प्रयोगान्तरं यस्येति विग्रहे बहुव्रीहिः । नारायणानुवाकस्य भगवत्परताया बहुप्रमाणसिद्धत्वात् तत्रत्यं शिवपदं भगवत्पर-

मिति स्पष्टमिति भावः । तथाविधं शिवपदं कर्म । श्वेताश्वतरागमः कर्ता । प्रक्रान्तश्चासौ मुक्तिप्रदश्चेति विग्रहे निम्नोन्नतादिवत् समासः । "वेदाहमेतम्" इत्यादिना प्रस्तुते मोक्षप्रदायिनि च । सर्वव्यापिनि "व्याप्य नारायणः स्थितः" इति भगवद्धर्मतया नारायणानुवाकप्रतिपादितं यत् सर्वव्यापित्वं तद्वत्तया सर्वव्यापी चेति प्रतिपादिते । सर्वतोमुखशिरोग्रीवे पुरुषसूक्तोक्तसर्वाननशिरोग्रीवत्वादिमत्तया प्रकृतवाक्योक्ते । तस्मिन्नेव भगवत्येव । निर्दिशति । उक्तप्रत्यभिज्ञापकैः भगवत्पर एवायं शिवशब्द इत्यर्थः । ध्रुवमिति निश्चये । स भगवान् "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इत्युपरितनवाक्येन पुनरपि व्यक्तः भूयोऽपि प्रतिपादितः । तत्र हि पुरुषशब्दस्य श्रवणात् , सत्त्वप्रवर्तकत्वरूपभगवल्लिङ्गाच्च, भगवत्परत्वं स्पष्टमित्यत्रत्यं शिवपदमपि भगवत्परमिति भावः ! "यो ह खलु वा अस्य सत्त्विकोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः" इति मैत्रायणीयश्रुत्या सत्त्वप्रवर्तकत्वं भगवल्लिङ्गमित्यवगतम् । भगवच्छब्दश्च भगवदसाधारण इति "भगवानिति शब्दोयम्" इत्यादिनावगतम् । अतः पूर्वोत्तरस्वारस्याच्छिवशब्दो भगवत्पर इति भावः । यतो भगवानतः सर्वगतत्वेऽपि शिवो मङ्गळ इत्यर्थः । अन्यथा सर्वव्यापिसर्वगतशब्दयोः पुनरुक्त्यापत्तिः ॥

आकाशादिशब्दवद्रूढ्यर्थस्यायोग्यत्वादपि शिवशब्दो भगवत्परः । तदिदमाहुर्भट्टसुदर्शनपादाः—"सर्वाननशिरोग्रीवत्वं च पुंसूक्तार्थसारकम्" इत्यादिना । विस्तरेण वेदार्थसङ्ग्रहे च भगवता [भाष्यकारेणा]भिहितम्—"पुरुषस्यैव शुद्धिगुणयोगेन शिवशब्दाभिधेयत्वम् 'शाश्वतं शिवम्' इत्यादिना ज्ञातमेव । पुरुष एव शिवशब्दाभिधेय इत्यनन्तरमेव वदति । "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति । "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इत्यत्रैतत्पदेन शिवशब्दोऽभिहितः प्रत्यभिज्ञापितः" इति तत्तात्पर्यदीपिका । "सर्वाननशिरोग्रीवः" इत्यत्र सर्वेषां भगवदाननत्वादिबाधात् सर्वत्राननानि शिरांसि ग्रीवाश्चेति विग्रहे व्यधिकरणबहुव्रीहिरित्यभिप्रायेण सर्वतोमुखशिरोग्रीव इत्युक्तम् । सर्वव्यापी च भगवानित्युक्तभगवत्येव तु शिवशब्दनिर्देशोऽयमित्यभिप्रायेण तस्मिन्निर्दिशतीति भगवच्छब्दनिर्दिष्टे निर्दिशतीत्युक्तम् ॥ (77)

* * * *

[अव० ] " यदा तमस्तन्न दिवा न रात्रि-
र्न सन्न चासच्छिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं
प्रज्ञा च तस्मात् प्रसृता पुराणी ॥"

इत्युपरितनवाक्यस्थशिवशब्दस्य भगवत्परत्वमुपपादयति—[ यदित्यादि ]

[मू० ] यच्छ्वेताश्वतरश्रुतिः शिवपदं वक्ति प्रयुक्तं हरा-
वग्रे जाग्रति विश्वकारणपरं तत्रैव युक्तं हि तत् ।
साधारण्यविदूरविष्णुभगवन्नारायणाद्याह्वयै-
राहुः कारणमेनमौपनिषदा भागास्तदाकाङ्क्षिणः ॥ (18)

[व्या०] श्वेताश्वतरश्रुतिर्यच्छिवपदं, अग्रे उपरिष्टाद्वक्ति प्रयुङ्क्ते, ' न सन्न चासच्छिव एव केवलः' इत्युपरिष्टाद्यच्छिवपदं निर्दिशति । हरौ प्रत्युक्तम् 'शाश्वतं शिवम्' ' सर्वः शर्वः शिवः, इत्यादिषु सर्वसंहारकर्तरि भगवति प्रयुक्तम् । विश्व—कारणपरम्—जगत्कारणविषयम् । तत् शिवपदम् । अग्रे इत्यत्रापि संबध्यते । अग्रे—सृष्टेः प्राक्काले । जाग्रति ' आनीदवातं स्वधया तदेकम्' इत्युक्तरीत्या स्वेनैव धारणसामर्थ्येन ब्रह्मेशानादिवदप्रलीनतया तिष्ठति । तत्रैव हरिशब्दनिर्दिष्टे भगवत्येव । युक्तं बोधकत्वात्मकसंबन्धरूपप्रयोगार्हं, यदा तम इत्याद्युक्तजगच्छून्यत्वेऽपि मङ्गळरूपत्वं व्यञ्जयितुं तत्रैव प्रयोगार्हं, कारणत्वशङ्कितदोषव्यावर्तनाय वा, तत्रैव प्रयोगार्हमित्यर्थः । अस्य शिवशब्दस्य, कारणविषयत्वाद्भगवत एवं महोपनिषदादौ कारणत्वविधानात्, शिवशब्दस्य चान्यत्र भगवति दृष्टप्रयोगत्वात्, प्रसिद्धशिवस्य च संहार्यत्वश्रवणाद्भगवतश्च तदभावात्, माङ्गळ्यरूपतादिव्यञ्जनस्य चात्रावश्यकत्वाद्देवतान्तररूढ्या विनापि शिवशब्दप्रयोगबाहुल्यादयं शिवशब्दो भगवत्पर इति भावः । ननु शिवशब्दशक्तिद्वयानुग्रहाय रूद्रपर एवायं शिवशब्द इत्यत्राह—साधारण्येत्यादि । हि यस्मात् । औपनिषदा भागाः महोपनिषदाद्युपनिषद्गतप्रदेशविशेषाः । तदाकाङ्क्षिणः सन्तः—कारणत्वशङ्कितदोषव्यावर्तनाय, सर्वशून्यत्वेऽपि मङ्गळत्वबोधनाय वा साधारणं तच्छिवपदमाकाङ्क्षमाणाः सन्तः । साधारण्यविदूरैः योगेन योगरूढ्या वा व्यक्त्यन्तरवाचित्वरहितैः ' विष्णुस्तदासीत्'

'सर्वव्यापी स भगवान्' 'एको ह वै नारायण आसीत्' इत्यादिवाक्यगतै-र्विष्णुभगवन्नारायणाद्यैराह्वयैर्नामभिः, पुरुषादिनाम्नामाद्यशब्देन परिग्रहः। एवं श्रुतिस्थशिवशब्दविषयतया पूर्वार्धे मयोपात्तमिमं भगवन्तं कारणमाहुः—जगत्कारणं विदधति। तस्मात्तच्छिवपदं तत्रैव युक्तमित्यर्थः। न तु नारायणादीनां नाम्नाम् अन्यत्र संभवः। "अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तितः" इति वचनेन, "भगवानिति शब्दोऽयम्" इत्यादिना, नारायणत्वेन च साधारण्यविदूरत्वं विष्ण्वादिनाम्नामवगतम्। अत्र च शिवशब्दे रूढिद्वयानुग्रहे नारायणशब्दे लक्षणा स्यात्। शिवशब्दे विशेषरूढिं परित्यज्य सामान्यरूढिमात्राङ्गीकारे तु न कुत्रापि लक्षणेति विशेषरूढिर्नानुग्राह्या। अपि च बहिराज्यनयात्र विशेषरूढिः शिवशब्दस्य। न चैवं सति पुरुषशब्देऽपि विशेषरूढिर्न स्यादिति वाच्यम्। तत्संज्ञकत्वप्रमाणबलेन पुरुषशब्दे विशेषरूढिस्वीकारात्। नारायणशब्दे लक्षणाप्रसङ्गादेव ईशादिशब्देषु यौगिकेष्वपि वृत्तिद्वयाग्रहो निरस्तः। नारायणशब्दस्य भगवतोऽन्यत्र योगाङ्गीकारे तु णत्वाभावः सुप्रसिद्धः। यथाकथंचित् येन केनचिद्व्युत्पत्तिविशेषेण 'अण् क्यङ्ल्युट्सुकृतेषु' ? इत्यादिना तदुपपादने तु मनुस्मृत्यादिप्रसिद्धयोगत्याग इति भावः। प्रकारान्तरेण नव्योत्प्रेक्षितणत्वोपपत्तिनिरासश्चासत्कृतणत्वतत्त्वप्रपञ्चेऽनुसन्धेयः। महाचार्यैरस्य वाक्यस्यार्थोऽनुगृहीतः—"यदा तमः" "तमः परे देव एकीभवति" इति अविभक्तावस्थं तमः न दिवादि च, समस्तकार्यविधुरो भगवानेव—तत्तदा—अक्षरमिति भगवतः स्वरूपतो विकाराभावो विधीयते अत्र च शिवशब्देन भगवन्निर्देशः सर्वशून्यत्वेऽपि मङ्गलरूपत्वं व्यञ्जयितुम्। अस्तु वा शिवशब्दस्यैव विधायकत्वम्। अथापि शिवशब्देन भगवत एव कारणतया विधिः स्यात्। नारायणकारणत्वविध्यनुसारात्। न च वैपरीत्यं शङ्क्यम्। शिवादिशब्दानां भगवदभिधानत्वाद्रूढ्यन्तरनिमज्जनसामान्यतरवद्रूढिमत्त्वाद्भगवति दृष्टप्रयोगत्वाच्चेति ॥ (78)

* * * *

[अ०] 'यच्छ्वेताश्वतर' इत्यादिश्लोकद्वयोक्तं विवृणोति—[यदग्र इत्यादि]

[सू०] यदग्रे जागर्ति श्रुतशिवपदं ब्रह्म परमं
जगद्धेतुः श्वेताश्वतरनिगमान्ते स भगवान् ।
प्रयुक्तो यत्तस्मिन् यजुषि शिवशब्दः श्रुतिशिर-
स्यतत्साधारण्यं न समगणि नारायणगिरः ॥ (79)

[व्या०] श्वेताश्वतरनिगमान्ते—श्वेताश्वतरोपनिषदि । अग्रे श्रुतशिवपदम् 'तस्मात् सर्वगतः शिवः' 'शिव एव केवलः' इत्युपरितमखण्डयोः शिवशब्दाभिहितम् । जगद्धेतुः—जगत्कारणभूतम् । यत्परमं ब्रह्म जागर्ति 'किं कारणं ब्रह्म' 'उद्गीतमेतत् परमं नु ब्रह्म' इति वाक्ययोरुपक्रमगतयोः प्रतीयते । सः—श्वेताश्वतरे शिवशब्दाभिहितं ब्रह्म । भगवान् "सर्वव्यापी स भगवान्" "पुरुष इति चिन्त्यम्" "तमाहुरग्र्यं पुरुषम्" इत्युपक्रमोपसंहारमध्येषु पुरुषभगवदादिशब्दनिर्दिष्टो नारायण एव। विधेयप्राधान्यात् स इति पुल्लिङ्गता। कुत इत्यत्राह--प्रयुक्त इत्यादि । यत्—यस्मात् । यजुषि श्रुतिशिरसि तैत्तिरीयके शिवशब्दः, तस्मिन् भगवति । 'शाश्वतं शिवमच्युतम्' इति प्रयुक्तः ततः श्वेताश्वतरस्थशिवशब्दाभिहितोऽपि भगवानेवेत्यर्थः । ननु तैत्तिरीयकस्य कथं भगवत्परत्वमिति शङ्कायां तिष्ठन्तु समुद्रशायित्वलक्ष्मीपतित्वादिलिङ्गानि, नारायणशब्दश्रुतिरेव तैत्तिरीयकस्य भगवत्परत्वसाधने पर्याप्तेत्याह—अतत्साधारण्यमित्यादिना । नारायणगिरः नारायणशब्दस्य । अतत्साधारण्यं (मतेषु) भगवद्व्यतिरिक्तेषु ब्रह्मरुद्रादिषु साधारण्यं भगवद्वृत्तित्वे सति वृत्तिमत्त्वरूपं सामान्यशब्दत्वम् । न समगणि—नाबोधि । अत्र श्रुतिस्मृतिव्याकरणैरित्यादिः । महोपनिषदाद्यैकार्थ्यान्नारायणशब्दस्य बहुलमभ्यासाच्च तैत्तिरीयं भगवत्परमिति, तत्रत्यशिवशब्दाभिधेयो भगवानेवेति, तदैकार्थ्याच्छ्वेताश्वतरस्थशब्दाभिधेयोऽपि स एवेत्यर्थः । तदिदमुक्तं महाचार्यचरणैः—"कारणविषयनारायणशब्दस्येयं निरुक्तिः, प्रकरणात् । कारणगोचरनारायणशब्दस्यैव च त्वया रुद्रपरत्वमिष्यते । अतस्तेनैव योगेन तत्र प्रवृत्ते णत्वानुपपत्तिरनिवार्या । न च तन्निरुक्तेश्चतुर्मुखपरत्वं शङ्कार्हम् । अण्डोत्पत्त्यनन्तरोत्पन्नस्य महदादितत्त्वकारणत्वासंभवात् । मानववचनव्याख्यानं च वेदान्तविजये द्रष्टव्यम्" इति ॥ (79)

* * * * *

[ अव० ] इत्थम् 'प्रस्तुत्य' इत्यादिचतुःश्लोक्या श्वेताश्वतरोपनिषदो भगवत्परत्वमुपपादितम्। अथ 'यद्देवैरनुयुक्तः' इत्याद्येकादशश्लोक्या अथर्वशिरसो भगवत्परत्वमुपपादयति—[ यद्देवैरित्यादि ]

[ मू० ] यद्देवैरनुयुक्त उत्तरमुशन् रुद्रो विवृत्यात्मनि
व्याजह्रे महतीमधीश्वरधुरामाथर्वणे मूर्धनि ।
स प्रादुर्भवदन्तरात्मभगवद्भूमाफणत्सोऽन्तरा-
दन्तः प्राविशदित्यधीतविधया तद्धामदेवादिवत् ॥ (४०)

[ व्या० ] अत्रैतत्प्रभृति षट्श्लोक्युपयुक्तोऽथर्वशिरोवाक्यसन्दर्भः "देवा ह वै स्वर्गं लोकमगमन्। ते देवा रुद्रमपृच्छन्। को भवानिति। सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च। नान्यः कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तरं प्राविशत्। दिशश्चान्तरं प्राविशत्। सोऽहं नित्योऽनित्यो ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणां चोदञ्चोऽहमधश्च ऊर्ध्वं चाहं दिशश्च विदिशश्चाहं पुमानहमपुमांस्त्र्यक्षश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुप्जगत्यनुष्टभश्चाहमित्यादि—धर्मेण तर्पयामि स्वेन तेजसा" इत्यन्तः ॥

अस्यायमर्थः—देवाः स्वर्गलोकं गत्वा, तपस्विवेषधरं युक्तावस्थं रुद्रं दृष्ट्वा, मुनिवेषदर्शनेन निर्धारणाशक्त्या रुद्रं ज्ञात्वापि तस्य स्वातन्त्र्यपारतन्त्र्यजिज्ञासया वा कस्त्वमिति पृष्टवन्तः। सोऽब्रवीत्—देवप्रश्नस्योत्तरं रुद्रोऽब्रवीत्। किमसदादिवद्देवतामात्रमुत परमकारणभूत इति प्रश्नाशयः। सोऽब्रवीदित्यादि—अहमेक आसं सृष्टिकालस्थनामरूपात्मकबहुत्वप्रतिद्वन्द्व्येकत्वरूपकारणावस्थोऽभवम्। प्रथममासं वर्तामि च भविष्यामि च कालत्रयवर्तिनां सर्वेषामात्माहम्। नान्यः कश्चिन्मत्तो व्यतिरिक्तः—मदन्यः कोऽपि न। अत्र रुद्रेण निर्दिष्टोऽस्मच्छब्दो रुद्रान्तर्यामिभगवत्परः। अतस्तद्गतमेव कारणत्वादिकं रुद्रेण निर्दिष्टम्। इतिशब्दस्य हेत्वर्थकत्वं प्रकारार्थकत्वं सामाप्त्यर्थकत्वं च। तत्र हेत्वर्थकत्वे योजनाद्वयम्। समाप्त्यर्थकत्वे प्रकारार्थकत्वे च प्रत्येकमेक एवान्वयः। नान्यः कश्चिन्मत्तो व्यतिरिक्त इति मद्व्यतिरिक्ताभावादहमेकः प्रथममासमित्येकोऽन्वयः। अत्र स बुद्धिस्थः परमात्मा आनन्दमयः, अन्तरात्प्राणमयान्तरान्मनोमयादन्तरं विज्ञानमयं जीवं प्राविशत्। दिशश्चान्तरं प्राविशत् दिगुपलक्षितबाह्याचेतनादन्तरं जीवं च प्राविशत्। स्वस्मिन् परमात्मप्रवेशस्य दृष्टान्ताभिप्रायेणोक्तं दिशश्चान्तरं प्राविशदिति

सोऽन्तरादन्तरमित्यादेरर्थः । मद्व्यतिरिक्ताभावादहमेव कारणत्वसर्वात्मभाववानित्युक्ते, 'पुरुष एवेदं सर्वम्' इति पुरुषस्यैव खलु सार्वात्म्यम् ; कथमस्येत्यपेक्षायां प्रह्लादन्यायस्फोरणाय सोऽन्तरादित्यादिवाक्यम् । यद्वा सोऽन्तरादन्तरं प्राविशदिति परमात्मा जीवात्मान्तर्यामितया जीवं प्राविशदिति हेतोः, मच्छरीरकपरमात्मनोऽन्यन्नास्तीत्यर्थः । "सर्वगत्वादनन्तस्य स एवाहमवस्थितः" इति ह्युक्तं प्रह्लादेन । इत्थमितिशब्दस्य हेत्वर्थकत्वे योजनाद्वयं दर्शितम् । नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्युक्ते सार्वात्म्यव्यपदेशः कीदृश इत्यपेक्षायामाह—इतीति । इत्थमित्यर्थः । वक्ष्यमाणप्रकारेणेत्यर्थः । वक्ष्यमाणः क इत्यत्राह—सोऽन्तरादित्यादि सर्वशरीरकत्वप्रयुक्तं सार्वात्म्यमित्यर्थः । इत्थमितिशब्दस्य प्रकारार्थकत्वं दर्शितम् । अस्तु वायमितिशब्दः समाप्त्यर्थकः । सोऽहमित्याद्यनन्तरं सोऽब्रवीदित्यध्याहरिष्यते । नान्यः कश्चिन्मत्तो व्यतिरिक्त इति सोऽब्रवीदित्यन्वयः । सोऽन्तरादित्यादि—स रुद्रः—अन्तरात् मनोमयान्तराद्विज्ञानमयात् अन्तरं आनन्दमयं परमात्मानं प्राविशत् बुद्ध्या प्राविशत् । अतो रुद्रो वामादेवप्रह्लादादिवदहमेव सार्वात्म्यादिमानित्युपदिदेशेत्यर्थः । अत्र योजनात्रये इतिशब्दस्य स्वस्थान एव स्थितिः । सोऽन्तरादन्तरं प्राविशदिति नान्यः कश्चिन्मत्तो व्यतिरिक्त इति योजनायां त्वस्य स्थानाच्चलनमिति भेदः । समाप्त्यर्थकत्वेनोक्तयोजनायां च उत्तरत्र सोऽब्रवीदित्यध्याहारः । कृत्स्नरुद्रवाक्यसमाप्तावितिकरणं योज्यमिति पक्षे तु नाध्याहारः । किं तु स्थानाच्चलनमेवेति, प्राविशदिति स्वेनैव उक्तम् । परमात्मानं स इति परामृश्य स परमात्मैवाहं च नित्यश्चानित्यश्चेत्येवं सार्वात्म्यं प्रपञ्चयति रुद्रः सोऽहमित्यादिनेत्ययं सिद्धान्तः ।

पूर्वपक्षे तु सोऽन्तरादन्तरं प्राविशदित्येतदुत्पाट्य कृत्स्नरुद्रवचनसमाप्त्यनन्तरं प्रक्षिप्य रुद्रो देवः दृश्यं स्थूलरूपं विहाय सूक्ष्मरूपं प्राविशदित्यस्यार्थमाहुः । स तु न समीचीनोऽर्थः । उत्पाटनप्रक्षेपयोरनुचितत्वादन्तरादन्तरमिति कोशप्रत्यभिज्ञायाः, प्राविशदिति नामरूपव्याकरणप्रसिद्धानुप्रवेशप्रत्यभिज्ञायाश्च बाधानौचित्याच्च । तदत्रेतिशब्दस्य हेत्वाद्यर्थकत्वमुपरितनपञ्चश्लोक्या वक्ष्यन्, प्रश्नप्रतिवचनरूपश्रुतिवाक्यसन्दर्भस्यार्थमाह—यद्देवैरित्यादिना ।

आथर्वणे मूर्धनि—अथर्वशिरसि । रुद्रः देवैरनुयुक्तः सन्—को भवानिति स्वातन्त्र्यपारतन्त्र्यजिज्ञासया पृष्टः सन् । उत्तरं—प्रतिवाक्यम् । उशन् सन् वक्तुमिच्छन् सन् । वश कान्तौ । कान्तिरिच्छा । महतीम्—असङ्कुचिताम् । अधीश्वरधुराम्—अधीश्वरत्वभारम् । 'ऋक्पूरब्धूः' इत्यादिना धूरशब्दान्तस्याकारः

प्रत्ययः । विवृत्य—सोऽहमित्यादिना प्रपञ्च्य । आत्मनि—स्वस्मिन् । व्याजह्रे—'अहमेकः प्रथममासम्' इत्यादिना 'स्वेन तेजसा' इत्यन्तेन सन्दर्भेणोक्तवानिति यत् । तत् कर्म । सः रुद्रः । सोऽन्तरादन्तः प्राविशदित्यधीतविधया—परमात्मकर्तृकजीवात्मकर्मकानुप्रवेशरूपः स्वकर्तृकपरमात्मकर्मकबुद्ध्यवगाहनरूपानुप्रवेशात्मकश्च यः "सोऽन्तरादन्तरं प्राविशत्" इति श्रुत्युक्तः प्रकारस्तेन प्रकारेण । प्रादुर्भवदन्तरात्मभगवद्भूमा सन्—अन्तरात्मा [1] वासौ भगवांश्च अन्तरात्मभगवान्, "एष सर्वभूतान्तरात्मा सर्वव्यापी च भगवान्" इति श्रुतिष्वन्तरात्मतया प्रसिद्धो भगवान्, तस्य भूमा—बहुत्वम्, सर्वात्मभावः, प्रादुर्भवन्—स्ववचनेन देवनां बुद्धौ स्वबुद्धौ च प्रकाशमानोऽन्तरात्मभगवद्भूमा यस्य तथाविधः सन् । वामदेवादिवत् । आदिना प्रह्लादपरिग्रहः । अफणत्—उक्तवानिति योजना । यदिदम् "अहमेकः प्रथममासम्" इत्यादिकमथर्वशिरसि रुद्रवचनं, तत्तस्य वचनम्, "अहं मनुरभवम्" सर्वगत्वादनन्तस्य स एवाहमवस्थितः" इत्यादिकं वामदेवप्रह्लाददीनां वचनमिव सर्वत्र भगवत आत्मतया अनुप्रवेशात् स्वस्य भगवदात्मकत्वप्रतिसन्धानमूलकमिति भगवत्सार्वात्म्यपरम् । न तु रुद्रस्यैव सार्वात्म्यादिपरमित्यर्थः । "सोऽन्तरादन्तरं प्राविशत् इत्यस्य रुद्रवाक्यत्वनिर्वाहद्वयानुगुण्येन, प्रादुर्भवच्छब्दस्य स्ववचनेन देवानां बुद्धौ स्वबुद्धौ च प्रकाशमान इत्यर्थाश्रयणं कृतम् । 'सोऽन्तरादन्तः प्राविशत्' इति च श्रुत्यर्थनिर्देशो न श्रुतिनिर्देश इति नान्तरशब्दानुपपत्तिः ॥ (80)

* * * *

[अव०] "नान्यः कश्चिन्मत्तो व्यतिरिक्त इति" [अत्र] इतिशब्दस्य हेत्वर्थकत्वं "सोऽन्तरादन्तरं प्राविशत्" इत्यस्य उपरि च स्वस्थान एव चान्वयं च श्लोकद्वयेन वक्ष्यंस्तस्य हेत्वर्थकत्वविरोधिनीं समाप्त्यर्थकतां निराकरोति—[नान्य इत्यादि]

[मू०] नान्यः कश्चिन्मत्त इत्युग्रवाक्या-
दूर्ध्वं नेतिस्तत्समाप्तिं ब्रवीति ।
प्राग्वत् पश्चादुग्रवाक्यानुवृत्तेः
सोऽहं नित्योऽनित्य इत्यादिभङ्ग्या ॥ (81)

1 चा.

[व्या० ] आथर्वणे मूर्धनीति वर्तते। अथर्वशिरसि, प्राग्वत्—इति पदात् पूर्वत्र "अहमेकः प्रथममासम्" इत्यादिरुद्रवाक्यस्येव। पश्चात्—इति शब्दादुत्तरत्र। "सोऽहं नित्योऽनित्य इत्यादिभङ्ग्या—रीत्या, उग्रस्य रुद्रस्य वाक्यानामनुवृत्तेः—अविच्छेदाद्धेतोः। नान्यः कश्चिन्मत्त इत्युग्रवाक्या-दूर्ध्वमितिः नान्यः कश्चिन्मत्तो व्यतिरिक्त इतीति श्रूयमाण इतिशब्दः, कर्ता तत्समाप्तिं रुद्रवाक्यसमाप्तिम् । न ब्रवीति—न वक्ति । "इतिः हेतुप्रकरणप्रकारादिसमाप्तिषु" इति कोशेन इतिशब्दस्य समाप्त्यर्थ-कत्वानुशासनेऽपि अत्र समाप्त्यर्थकत्वबाधादुत्तरत्राध्याहारप्रसङ्गाच्च; नायमिति-शब्दः समाप्त्यर्थकः। "सोऽब्रवीत्" इत्यस्योत्तरत्राध्याहारापेक्षयास्येतिशब्दस्य स्थानाचलनमात्रस्य न्याय्यत्वाच्चेति भावः। तदुक्तं भट्टसुदर्शनपादैः—"यद्यपि इतिशब्दस्य समाप्तिरेवार्थोऽर्थान्तरं न स्यात्; तथापि "धर्मिकल्पनातो वरं धर्मकल्पना" इति न्यायात् प्रयुक्तस्येतिशब्दस्य रुद्रवाक्यावसानेऽन्वयकल्पनं न्याय्यम्; न त्वप्रयुक्तपदान्तराध्याहारः" इति ॥ (81)

* * * *

[अव० ] एवं समाप्त्यर्थकत्वं निरस्य हेत्वर्थकत्वम् "सोऽन्तरादन्तरं प्राविशत्" इत्यस्यानन्तरमन्वयं चाह—[सोऽत इत्यादि]

[मू० ] सोऽतो हेतुं वक्ति नेतिः प्रकारं
प्रह्लादोक्तो हेतुरन्तः प्रवेशः।
प्रह्लादोक्तिः सर्वगत्वादनन्त-
स्येति व्यक्ता वैष्णवाख्ये पुराणे ॥ (82)

[व्या० ] अतः—समाप्त्यर्थकत्वानुपपत्तेः । स इतिः—पूर्वोक्त इतिशब्दः । हेतुं वक्ति—हेत्वर्थकः। प्रकारं न वक्ति—नापि प्रकारार्थकः। वाक्य-भेदापत्तेरिति शेषः। सोऽन्तरादन्तरं प्राविशदिति नान्यः कश्चिदित्याद्यन्वयः। भगवतः सर्वजीवेष्वात्मतयानुप्रवेशान्मच्छरीरकः परमात्मैव सार्वात्म्यादिमान् न तद्व्यतिरिक्तः कश्चिदित्यस्यार्थः। स्वशरीरकपरमात्मनोऽस्मच्छब्देन निर्देशे परमात्मनः सर्वजीवेष्वात्मतयानुप्रवेशो हेतुतयान्यत्राप्युक्त इत्याह—प्रह्ला-

दोक्त इति । अन्तः प्रवेशः—भगवतः सर्वजीवेष्वात्मतयान्तः प्रवेशः । हेतुः प्रह्लादोक्तः—अस्मच्छब्देन स्वशरीरकपरमात्मनिर्देशहेतुतया प्रह्लादेनाप्युक्त इत्यर्थः । का सा प्रह्लादोक्तिरित्यत्राह—प्रह्लादोक्तिरिति । वैष्णवाख्ये पुराणे सर्वगत्वादनन्तस्येति प्रह्लादोक्तिः—"सर्वगत्वादनन्तस्य स एवाहमवस्थितः" इत्यादिका प्रह्लादोक्तिः । व्यक्ता—स्फुटा । अतस्तद्वदत्रापि हेतूक्तिरुचितेति स्थानाच्चलनेऽपि हेत्वर्थकत्वमेव युक्तम् । न वाक्यभेदाध्याहारापादकप्रकारसमाप्त्यर्थकत्वमिति भावः । विष्णुपुराण इति वक्तव्ये वैष्णवाख्य इति निर्देशो—

"वेदेषु पौरुषं सूक्तं धर्मशास्त्रेषु मानवम् ।
भारते भगवद्गीता पुराणे वैष्णवम् परम् ॥"

इति वचनसरणेनास्य सकलपुराणापेक्षयाभ्यर्हितत्वव्यञ्जनार्थः ॥ (82)

* * * *

[अव० ] हेत्वर्थकत्व एव स्वस्थानान्वयपक्षमाह—[अथ वेत्यादि]

[मू० ] अथ वेति पदेन हेतुरत्र
व्यतिरेकोऽकथि नान्य इत्यधीतः ।
अहमेक इतीरितान्वयस्य
प्रतिपत्तुं सुकरः प्रकारपक्षः ॥ (83)

[व्या० ] अथ वा—('सोऽन्तरादन्तरं प्राविशत्' इति 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इति) [इतिशब्दस्य] स्थानाच्चलनेनान्वयाभावे । अथेतिपदेन—स्वस्थानस्थितेनेतिशब्देन । नान्य इत्यधीतो व्यतिरेकः—"नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इति वाक्यबोधितो रुद्रशरीरकपरमात्मव्यतिरिक्तवस्तुनः स्वनिष्ठत्वेनाभावः । अहमेक इतीरितान्वयस्य—"अहमेकः प्रथममासम्" इत्यादिना बोधितस्य रुद्रशरीरकपरमात्मनि सार्वात्म्यादिसद्भावरूपान्वयस्य । हेतुरकथि हेतुत्वेन बोधितः । स्वनिष्ठवस्त्वन्तरसद्भावे भगवतः सार्वात्म्यं न न सिध्यतीति स्वनिष्ठवस्त्वन्तराभावः सार्वात्म्यहेतुतया श्रुतिस्थेतिशब्देनोक्त

इत्यर्थः। पूर्वयोजनायामितिशब्दस्य स्थानाच्चलनेऽपि श्रुत्यन्तरप्रसिद्धानुप्रवेश-हेतुत्वबोधनात् स्वारस्यम्। अस्यां तु तदभावेऽपि स्वस्थान एवान्वयात् स्वारस्यमिति विवेकः। इतिशब्दस्य प्रकारार्थकत्वमपि संभवतीत्याह—प्रतिपत्तुं सुकरः प्रकारपक्ष इति। इतिशब्दस्य प्रकारार्थकत्वपक्षः, प्रतिपत्तुं निश्चेतुं, सुकरः सुखेन कर्तुं शक्यः। इतिशब्दस्य हेत्वर्थकत्वे स्थानाच्चलनपूर्वशेषत्वयोरापत्तेः। "इष्टं हि विदुषां लोके समासव्यासधारणम्" इति संग्रहविस्तरगर्भत्वेन वाक्यभेदस्याप्यदोषत्वात् प्रकारपक्षोऽपि युक्त एवेति भावः॥ (83)

* * * *

[अव०] इतिशब्दस्य प्रकारार्थकत्वे स्वतन्त्रवाक्यत्वे च सति "सोऽन्तरादन्तरम्" इति वाक्यस्य तद्विवरणत्वमित्याह—[रुद्रस्येत्यादि]

[मू०] रुद्रस्योक्तिः सोऽन्तरादित्यतोऽसौ
तस्मादन्यः कोऽपि तस्यान्तरात्मा।
अन्येषां चेत्युच्यते सोऽन्तरादि-
त्युक्त्या रौद्र्या सोऽपि विष्णुः प्रसिद्धः॥ (84)

[व्या०] अतः—प्रकारार्थकात् स्वतन्त्रवाक्यभूतादेतस्मादितिशब्दात्, परा। सोऽन्तरादित्यसौ उक्तिः रुद्रस्य, न तु वेदस्य, इतिशब्दस्य समाप्त्यर्थकत्वे तु सोऽन्तरादित्यादेर्वेदवाक्यत्वं वक्ष्यते। अस्य च रुद्रवाक्यत्वं इतिशब्दस्य हेतुप्रकारार्थकत्वयोरविशिष्टमिति व्यञ्जनाय हेतुप्रकारार्थकत्वोपपादनावसाने रुद्रवाक्यत्वोक्तिरिति ध्येयम्। अर्थमाह—तस्मादित्यादिना। रौद्र्या रुद्रवक्तृकतया श्रुतिस्थया। सोऽन्तरादित्युक्त्या—"सोऽन्तरादन्तरं प्राविशत्" इतिवाक्येन। न तस्मादन्यः—रुद्रादन्यः। तस्य रुद्रस्य। अन्येषां च जीवात्मनाम्। अन्तरात्मा कोऽपि व्यक्तिविशेषरूपेणानिर्दिष्टत्वनिबन्धनः कोऽपीति निर्देशः। इत्युच्यते—इति प्रतिपाद्यते। "सोऽन्तरादन्तरम्" इत्यनेन रुद्रव्यतिरिक्तो रुद्रस्यान्येषां जीवानां चान्तरात्मा प्रतिपाद्यत इत्यर्थः। अन्तरात्मत्वमात्रेण प्रतिपादनेऽपि भगवत एवात्र प्रतिपाद्यत्वं सिध्यति।

अन्तरात्मत्वस्य तत्रैव प्रसिद्धेरित्याह—सोऽपि विष्णुः प्रसिद्ध इति। सः अन्तरात्मा। विष्णुः प्रसिद्धः "सत अन्तर्यामी" "एष सर्वभूतान्तरात्मा" "तवान्तरात्मा मम च" इत्यादिषु विष्णुत्वेन प्रसिद्धः। अपिशब्देनाथर्व-शिरस्यपि "यो वै रुद्रः स भगवान् यश्च ब्रह्मा" इत्यादिना भगवच्छब्दनिर्देशेन भगवतः सर्वान्तरात्मत्वकीर्तनं समुच्चीयते। सोऽपि विष्णुः प्रसिद्ध इति विष्णुशब्दोपादानं "विष्णवे शिपिविष्टाय" इति वाक्यस्मारणार्थम्। शिपिषु पशुषु अन्तर्यामितया विष्टः प्रविष्ट इति हि तस्यार्थः। यद्वा "प्रतिपत्तुं सुकरः प्रकारपक्षः" इत्यत्रैवेतिशब्दस्य संग्रहत्वं सोऽन्तरादित्यादे-र्विस्तरत्वं च सुकरपदेनाभिप्रेतम्। अस्मिंस्तु श्लोके हेतुप्रकारार्थकत्वादिति-शब्दस्य सोऽन्तरादित्यादिकं रुद्रवाक्यमेवेति वदंस्तस्यार्थमप्याह—रुद्रस्ये-त्यादिना। अतः—इतिशब्दस्य हेतुप्रकारार्थकत्वात्। शेषं पूर्ववत्। इतिशब्दस्य योजनान्तराभिधाने योजनान्तरदूषणं तु योजनानां स्वारस्यविशेष-साम्यव्यञ्जनार्थमिति न दोषः॥ (84)

* * * *

[अव०] इतिशब्दस्य रुद्रवाक्यसमाप्त्यर्थकत्वपक्षमाह—[इतीत्यादि]

[मू०] इत्युक्तिर्वा समाप्तिं वदतु हरगिरः सोऽन्तरादित्यतोऽसौ
मा भूद्रुद्रोक्तिरित्थं सति न विघटना किञ्चिदस्मिन् मतस्य।
रुद्रः स्वात्मात्मभूतं हरिममलधिया संप्रविष्टश्चिकीर्षु-
र्मेधावीव स्ववश्यं नरमपरमिति व्यज्यते वेदवाचा॥ (85)

[व्या०] वाशब्दः पक्षपरिवृत्तिद्योतनार्थः। इत्युक्तिः इतिशब्दः, "नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्ययमितिशब्दः। हरगिरः—"अहमेकः प्रथममासम्" इत्यादिरुद्रवाक्यस्य। समाप्तिम्—अवसानम्। वदतु—बोधयतु। अतिसर्गे लोट्। अतिसर्गः कामचारानुज्ञा। अतः—इति-शब्दस्य समाप्त्यर्थकत्वाद्धेतोः। सोऽन्तरादित्यसौ रुद्रोक्तिर्मा भूत्—सोऽन्तरादित्यादिवाक्यं रुद्रवाक्यम् न स्यात्। अस्य रुद्रवाक्यत्वाभावोऽप्यस्तु। श्रुतिवाक्यत्वं चास्त्विति भावः। इत्थं सति—इतिशब्दस्य समाप्तिपरत्वे,

सोऽन्तरादित्यस्य श्रुतिवाक्यत्वे च सत्यपि । अस्मन्मतस्य—श्रुतिस्मृतिसूत्रवृत्तिस्वारस्यानुरोधिनामस्माकमिष्टस्य "रुद्रो न सर्वान्तरात्मतयाथर्वशिरःप्रतिपाद्यः; किं तु तदन्तर्यामी भगवानेव सर्वान्तरात्मतया तत्प्रतिपाद्यः" इत्येवंरूपस्यार्थस्य । किंचिदपि विघटना न—एकदेशस्यापि विरोधो नास्तीत्यर्थः ॥

अत्रेतिशब्दस्य समाप्त्यर्थकत्वे सोऽन्तरादित्यादिवाक्ये तच्छब्देन रुद्र एव परामृश्यते । ततश्च तस्यैवान्तर्यामित्वमुच्येत इत्येका विघटना । अन्तरमित्यस्य भगवत्परत्वे प्राविशदित्यस्यानन्वयादन्तरमिति न भगवत्परमित्यपरा विघटना । सैषा द्वय्यपि नास्ति । "सोऽन्तरादन्तरं प्राविशत्" इति वाक्ये तच्छब्देन रुद्रपरामर्शेऽपि न तस्य सर्वान्तरात्मत्वं वक्तुमनेन शक्यम् । "एष सर्वभूतान्तरात्मा" इत्यादिप्रमाणगणेन सर्वान्तरात्मत्वस्य भगवल्लिङ्गतावगमात्, अन्तरादन्तरमिति चानन्दवल्लीप्रत्यभिज्ञयानन्दमय एवान्तरादन्तरमिति निर्दिश्यत इति, तस्य , "स यश्चायं पुरुषे यश्चासावादित्ये" इत्यादित्यमण्डलान्तर्वर्तितावगमादादित्यमण्डलान्तर्वर्तिनश्च पुण्डरीकाक्षत्वश्रवणात्, अन्तरादन्तरमिति भगवानेवोच्यते । "विष्णुरात्मा भगवतः" "तवान्तरात्मा मम च" इति विशिष्यैवं रुद्रान्तर्यामित्वं भगवतोऽवगतम् । अतः प्रविशतेः सम्यगवबोधार्थकत्वात् स रुद्रो जीवान्तर्यामिणं भगवन्तं सम्यगनुसंहितवानिति "सोऽन्तरादन्तरं प्राविशत्" इत्यस्यार्थ इति न कश्चिद्विरोध इति तदिदमाह—रुद्र इत्यादिना ।

अपरं नरं स्ववश्यं चिकीर्षुर्मेधावी नरोऽपरं नरमिव रुद्रः स्वात्मात्मभूतं—स्वस्यान्येषामात्मनां चात्मभूतम् । हरिम्—भगवन्तम् । अमलधिया सम्यग्ज्ञानेन । संप्रविष्टः अवगाहतेति वेदवाचा व्यज्यते । "सोऽन्तरादन्तरं प्राविशत्" इति श्रुतिवाक्येनायमर्थ उच्यत इत्यर्थः ॥

अपरं नरमित्युक्तेर्मेधावी नर इति लभ्यते । अत्र च —

"यस्य यस्य हि यो भावस्तेन तेन हि तन्नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥"

इति चाणक्यवचनमभिप्रेतम् । तेन तेन हि तन्नरमनुप्रविश्येति तत्तद्भावयुक्ततया तं ज्ञात्वेत्यर्थः । एवं च तद्वचनस्थमेधाविपुरुषकर्तृकपुरुषान्तरकर्मकबुद्ध्यवगाहनरूपप्रवेशसदृशो

यः स्वेतरसर्वजीवान्तर्यामिभगवत्कर्मकबुद्ध्यवगाहनरूपप्रवेशस्तत्कर्ता रुद्र इति लाभस्तद्वचन इव श्रुतिवाक्येऽपि प्रविशतिर्बुद्ध्यवगाहनार्थक इत्युक्तं भवति । प्रकृतरुद्रकर्तृकबुद्ध्यव-गाहने चाणक्यवचनस्थमेधाविकर्तृकावगाहनसादृश्यं च प्रविशतिवाच्यत्वरूपं विवक्षितम् । वेदे च शब्दार्थसंबन्धविशेषावधारणस्य लोकतन्त्रत्वाच्चाणक्यवचनं दृष्टान्ततयोपात्तम् । अत्र च प्रविशतेर्बुद्ध्यवगाहनार्थकत्वमेव दृष्टान्तोपजीव्यम् । अत उपमानस्य मेधाविनो लोकसिद्धत्वाभावान्मेधावीवेत्युक्तिरयुक्ता ; 'देवदत्त इव यज्ञदत्तो गच्छति' इत्यत्रेवात्रा-प्यर्थसादृश्यमेव लभ्येतेति शङ्काया नावकाशः । चाणक्यवचनोपादानं च प्रदर्शनार्थम् । तन्मतप्रवेशोऽस्मन्मतप्रवेशोऽपि प्रयोगेऽप्यनुप्रविशतिर्बुद्ध्यवगाहनार्थको दृष्ट इत्यपि ध्येयम् । तदुक्तं भट्टसुदर्शनपादैः––"अनुप्रवेशशब्दस्य सम्यग्बोधनार्थकत्वं लोकोक्ति-सिद्धम् । तथा चाणक्यप्रयोगश्च––

'यस्य यस्य हि यो भावस्तेन तेन हि तन्नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥'

इति रुद्रः स्वान्तर्यामिणं सर्वपदार्थान्तर्यामिणं च परमात्मानं तच्छरीरकं बुद्ध्यानुसंहित-वानित्यर्थः" इति । अत्र च सर्वान्तरात्मत्वं भगवत एव श्रुत्यन्तरेषु प्रसिद्धम् । अत्रापि "यो वै रुद्रः स भगवान्" इति वक्ष्यत इत्यभिप्रायेण हरिमित्युक्तम् । "एष सर्वभूतान्तरात्मापहतपाप्मा सत आत्मान्तर्याम्यमृतः" इत्यादिष्वन्तरात्मत्वेऽपि भगवतो न तद्गतदोषैः संस्पर्श इति बोधनाय, 'सर्वभूतान्तरात्मा सत आत्मा' इत्युक्त्वा 'अपहतपा-प्मामृतः' इत्युक्तम् । तत्सूचनाय चात्र स्वात्मात्मभूतं हरिमित्युक्तम् । "हरणादेव पापानां हरिरित्युच्यते बुधैः" इति हरिशब्दनिरुक्तेः ॥

नन्वितिशब्दस्य उक्त्यर्थकधातुसमभिव्याहृतस्य स्वसमभिव्याहृतवाक्यस्वरूपतदर्थ-परत्वमेव दृष्टमिति नास्य समाप्त्यर्थकत्वं युक्तम् । किं चेतिशब्दस्य समाप्त्यर्थकतायाम् "इत्युपनिषत्" इत्यादाविव स्वबोध्यसमाप्तिमद्वाचकपदात् पूर्वनिर्देशो युक्त इति चेदत्राहुः । यद्यपि पूर्वं बोध्यवाक्यनिर्देशः, तदनन्तरमितिशब्दः, तदनन्तरमुक्त्यर्थकधातुनिर्देश इत्येतादृशक्रमवस्तु––

"सुतनु जहिहि मौनं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत् ।
इति निगदति नाथे"

इत्यादिषूक्त्यर्थकधातुशिरस्केतिशब्दस्य, स्वसमभिव्याहृतवाक्यजन्यबोधसमानाकारबोधंपरत्वं, तस्य तु बोधस्य जनकतासंसर्गेणोक्त्यर्थकधातुवाच्योक्तिक्रियायां प्रकारतया भानं, इतिशब्दोत्तरोक्त्यर्थकधातोश्च स्वसमभिव्याहृतेतिशब्दसमभिव्याहृतवाक्यसमानानुपूर्विकवाक्यबोधकत्वं च व्युत्पत्तिसिद्धम् ; तथापि तादृशक्रमस्यात्राभावात् "पश्य मृगो धावति" इत्यादाविव मृगधावनरूपवाक्यार्थस्य 'सोऽब्रवीत्' इत्युक्तिक्रियां प्रति "अहमेकःप्रथममासम्" इत्यादिवाक्यार्थस्य कर्मत्वबोधादितिशब्दस्य समाप्त्यर्थकत्वं युक्तम्। समाप्त्यर्थकेतिशब्दस्य स्ववाच्यसमाप्तिमद्वाचकपदोत्तरनिर्देशश्चाक्षरपाठादौ दृष्टः । अतः समाप्त्यर्थकत्वमुचितम् । एवं सति सोऽन्तरादित्यत्र स इतिशब्दः स्वसमानविभक्तिप्रकृतिकेन सोऽब्रवीदित्यत्र(इत्येन)[स्थेन] स इत्यनेन एकार्थो भवति । एवमुपक्रमस्वारस्यानुरोधेन "सोऽहं नित्योऽनित्यः" इत्याद्युपरितनवाक्ये 'सोऽब्रवीत्' इत्यध्याहारो न दुष्यति । सोऽहमित्यादिवाक्यस्य च 'अहमेकः' इत्यादिवाक्यविवरणरूपत्वान्न क्रियान्तरापेक्षेति समाप्त्यर्थकत्वं युक्तमेवेति ॥ (85)

* * * *

[अव०] एवमथर्वशिरसि प्रथमखण्डस्थरुद्रवाक्यानां रुद्रान्तर्यामिभगवत्परत्वमुपपादितम् । इदानीं द्वितीयखण्डस्थदेवतास्तुतिवाक्यानां रुद्रशरीरकपरमात्मपरत्वमुपपाद्यते—[श्रुत्वेत्यादि] ·

[मू०] श्रुत्वा रुद्रवचस्तदीयमहिमस्तोत्राय लब्धोद्यमाः
सर्वैश्वर्यमथर्वमूर्ध्नि यदपि व्याजह्रिरेऽस्यामराः ।
तेऽन्तर्यामिसमाधिहेतव इह व्यक्ता हि रुद्रोक्तय-
स्तद्युक्तास्तदनूक्तयस्तु दिविषद्वाकास्तदेकाशयाः ॥ (86)

[व्या०] अत्रायं द्वितीयखण्डस्थवाक्यसन्दर्भः—"यो वै रुद्रः स भगवान् यश्च ब्रह्म तस्मै वै नमो नमः । यो वै रुद्रः स भगवान् यश्च महेश्वरस्तस्मै वै नमो नमः" इत्यादिः, "यो वै रुद्रः स भगवान् यच्च सत्यं तस्मै वै नमो नमः" इत्यन्तः । अत्र च—यो रुद्रः स भगवानेव, यो ब्रह्मा सोऽपि भगवानेव, अत उभयात्मकाय भगवते नम इत्यादिरर्थः । यश्च विष्णुरित्यवतारविशिष्टतया नमस्कार्यत्वमुच्यते । प्रतिपर्यायं रुद्रविशेषणोपादानाद्रुद्रान्तर्यामिणः सार्वात्म्योपासनमिह विधीयते ॥

अत्र महाचार्यचरणाः—"भगवच्छब्दस्यापि रुद्रपरत्वे यो रुद्रो यश्चान्य-स्ताभ्यां नम इति वाच्यं, तस्मा इत्यनन्वितमेव । यो रुद्रो ब्रह्माभूदित्यर्था-ङ्गीकारे द्वितीययत्पदासामञ्जस्यम् । यो रुद्रोऽभूद्यो ब्रह्माभूदित्यर्थाङ्गीकारे धर्म्यन्तरं स्वरसतो लभ्येत । पक्षद्वयेऽपि स भगवानिति तच्छब्दस्य स्वारसिकयच्छब्दप्रति-निर्देशकत्वभङ्गः । यो वै रुद्रः स भगवान् तस्मै नमः (एव च)[यो वै] ब्रह्मा [स भगवान्] तस्मै नम इत्यर्थः । ब्रह्मशब्दो रुद्रपर्यन्त इत्यङ्गीकारेऽपि अयं दोषः समानः । तस्मै नम इत्यावृत्तिरधिका । यश्च ब्रह्मा सोऽपि भगवानिति तद्भगवच्छब्दावृत्तिस्तु न दोषः । चकारेण द्योतनात् । एवं च यो वै यश्चेति वाक्यद्वयेन उभयतादात्म्यमुक्त्वा तस्मै नम इति तृतीयवाक्येन तादृशस्य भगवत एव नमस्कारः क्रियत इति । अथापि यो रुद्रः स भगवानिति भगवच्छब्दयौगिकत्वमेवेष्यत इति चेन्न; बाधकं विना स्वारसिकरूढिपरित्यागायोगात् । किं च यो रुद्रः स सार्वज्ञ्यादि-गुणकः, यश्च ब्रह्मा सोऽपि सार्वज्ञ्यादिगुणक इत्युक्तावन्यत्रापि तथात्वेऽयोग्यार्थता । रुद्रस्तुतिविरोधश्च । तस्माद्रूढ्या भगवत्परत्वमेव युक्तम्" इति चानुजगृहुः ॥

तदिदमाह—**श्रुत्वेत्यादिना** । **अथर्वमूर्ध्नि**—अथर्वशिरसि । **अमराः**—देवाः । **रुद्रवचः श्रुत्वा**—"अहमेकः" इत्यादिकं रुद्रवाक्यं श्रुत्वा । **तदीयस्य** रुद्रवाक्यप्रतिपादितत्वेन रुद्रवाक्यीयस्य वस्तुनः, यो **महिमा** सार्वात्म्यादिप्रयुक्त उत्कर्षः, तस्य **स्तोत्राय** तत्प्रतिपादकशब्दसन्दर्भं रचयितुम् । **लब्धोद्यमाः सन्तः** प्रयत्नवन्तः सन्तः । **सर्वेषामैश्वर्यं** चतुर्मुखादीन् सर्वान् (प्रत्यनीश्वरत्वमस्य) [प्रति ईश्वरत्वमस्य] **व्याजह्रिरे**— यो वै रुद्र इति प्रतिपर्यायं रुद्रशब्दनिर्देशेन रुद्रगततया व्याहृतवन्त इति यत्, ते **दिविषद्वाकास्तदेकाशया युक्ता** इति योजना । **हि** यस्मात् । **इह**—अथर्वशिरसि प्रथमखण्डे । **रुद्रोक्तयोऽन्तर्यामिसमाधिहेतवो व्यक्ताः** "अहमेकः प्रथममासम्" इत्यादयो रुद्रगिरो रुद्रस्य स्वान्तर्यामिभगवद्ध्यानहेतुका देवानां स्वश्रवणेन रुद्रान्तर्यामिभगवद्ध्यानहेतुभूताश्चेति व्यक्ताः, स्फुटाः । **तत्**—तस्मात् । **तदनूक्तयस्ते दिविषद्वाकाः**—रुद्रवाक्यार्थीभूतनारायणसर्वान्तर्यामित्वानुवादिन्यः "यो वै रुद्रः" इत्यादयो देवोक्तयः । **तदेकाशया युक्ताः**—तस्मिन्नन्तर्यामिणि एको मुख्य आशयस्तात्पर्यम् एषां तथोक्ता युक्ताः, उचिता इत्यर्थः । वचेर्भावे घञि कुत्वम् ॥

आख्यातान्तपदेन क्रियायाः क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वरूप-साध्यत्वप्रकारेण बोधनात्, व्याजह्रिर इत्यत्र व्याहरणक्रियागतलिङ्गसङ्ख्ययोरनभिव्यक्तेः

तद्विशेषणं यत्पदमौत्सर्गिकनपुंसकलिङ्गैकवचनान्ततया निर्दिष्टम् । तस्या एव तु क्रियायाः सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धन इत्युक्तरीत्या घञन्तधातुना लिङ्गसङ्ख्याभिव्यक्तियोग्यसिद्धावस्थया प्रतिपादनात् "कृदभिहितो भावो द्रव्यवत् प्रकाशते द्रव्यवलिङ्गसङ्ख्यादीन् गृह्णाति" इति लिङ्गसङ्ख्यादिबोधकविभक्तिप्रयोगस्यावश्यकत्वेन 'घञन्तं पुंसि" इति पुंलिङ्गत्वं, वाक्यबहुत्वात् बहुवचनान्तत्वं च वाकशब्दस्य युक्तमिति तद्विशेषणं तत्पदमपि तद्वदेव पुंलिङ्गबहुवचनयुक्ततया निर्दिष्टमिति ध्येयम् । अपिशब्दश्च रुद्रवाक्यानां तदन्तर्यामिपरत्वं समुच्चिनोति । तुशब्दश्च प्रतिपर्यायं रुद्रशब्दाभ्यासाद्रुद्रपरत्वमिति शङ्कायामभ्यासस्य रुद्रशरीरकभगवदुपासनतात्पर्यकत्वेनोपपत्तेर्नान्तर्यामिपरत्वक्षतिरिति परिहारं सूचयति । अत्र— श्रुत्वा रुद्रवचस्तदीयमहिमस्तोत्रायेत्यादिना "ते देवा रुद्रं नापश्यन् ते वा रुद्रं स्तुवन्ति" इति प्रथमखण्डान्तवाक्यद्वयार्थ उक्तः । रुद्रं नापश्यन्—यथापूर्वं स्वातन्त्र्यविशिष्टं नापश्यन्नित्यर्थः । रुद्रं स्तुवन्ति रुद्रशरीरकं भगवन्तं स्तुवन्तीत्यर्थः । अन्तर्यामिसमाधिहेतव इत्यनेन च "ते देवा रुद्रं ध्यायन्ति" इति तत्रत्यचरमवाक्यस्यार्थोऽनूदितः । रुद्रं ध्यायन्ति—यथोपदेशं भगवदात्मकतया रुद्रं ध्यायन्तीत्यर्थः । तदिदमुक्तं भट्टसुदर्शनपादैः—"द्वितीयखण्डो रुद्रवाक्यानुवादेन स्तुतिपरत्वादन्तर्यामिविषयः" इति, रुद्रवाक्यार्थीभूतनारायणसर्वान्तर्यामित्वानुवादेन स्तुतिपरत्वादिति भावः" इति च । तद्भावप्रकाशिका "तदीयमहिमस्तोत्राय" इति । क्रियार्थेत्यादिना चतुर्थी ॥ (86)

* * * *

[अ० ] एवमथर्वशिरःप्रथमद्वितीयखण्डयोर्भगवत्परत्वमुपपादितम् । तृतीयखण्डस्तु परमात्मवैभवप्रतिपादकत्वात् द्वितीयखण्डस्य तत्परत्वोपपादनेनैव भगवत्परतयोपपादितप्रायः । इदानीं तुरीयखण्डस्य भगवत्परत्वप्रतिबन्धिनीं रुद्रपरतां रुद्रेशानादिनामविशेषश्रवणसंभावितां निराचष्टे—[ओङ्कारेत्यादि ]

[मू० ] ओङ्कारपूर्वकतया प्रतिपादितानि
नामान्तराणि ननु रुद्रपुरस्सराणि ।
आथर्वणे शिरसि तानि तु न प्रसिद्ध-
रुद्रेशितृत्वमुपपादयितुं क्षमन्ते ॥ (87)

[व्या०] अत्रायं तुरीयखण्डवाक्यसन्दर्भः—

"हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः ॥

तस्योत्तरतः । शिरो दक्षिणतः पादौ यदुत्तरतः स ओङ्कारः स प्रणवो यः प्रणवः सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं तत्परं ब्रह्मेति स एको रुद्रः स ईशानः स भगवान् स ईश्वरः स महादेवः" इति । अत्र पूर्वखण्डप्रतिपादितपरमात्मवाचकस्य प्रकृतविद्याङ्गभूतस्य ओङ्कारस्य नामधेयानि निर्दिष्टानि । तदाहुः भट्टसुदर्शनपादाः— "तद्वाचकस्योङ्कारस्य नामधेयानि चतुर्थे" इति ।

तदाह—ओङ्कारपूर्वकतयेत्यादिना । आथर्वणे शिरसि—अथर्वशिरसि । तुरीयखण्ड इति शेषः । रुद्रपुरस्सराणि रुद्रादिनामान्तराणि रुद्रेशानेश्वरमहादेवात्मकनामविशेषाः । "यो वै रुद्रः स भगवान्" इति पूर्वपूर्वनिर्दिष्टनाम्नोऽन्यत्वाभिप्रायेणान्तरशब्दनिर्देशः । अन्यदेवतत्वान्तरम् अन्यदाकारान्तरमित्यादाविवान्तरशब्दस्य विशेषपरत्वान्नामविशेषा इति व्याख्यातम् । ओङ्कारपूर्वकतया प्रतिपादितानि ननु—'तिस्रो मात्राः परस्तु सः' इति परमात्मवाचकतयोक्तोङ्कारं स स इति तच्छब्दैर्निर्दिश्य तन्नामधेयतया विहितान्येवेत्यर्थः । तानि— ओङ्कारनामधेयतयोक्तानि रुद्रादीनि नामानि । प्रसिद्धस्य सृज्यत्वादिना श्रुत्यादिप्रसिद्धस्य, रुद्रस्येशितृत्वं परत्वमुपपादयितुं वक्तुम्, न क्षमन्ते—नार्हन्ति । तुशब्देन पूर्वोक्तशङ्का व्युदस्यते । ओङ्कारनामधेयतयावगतत्वान्न प्रसिद्धरुद्रपरत्वमेषामित्यर्थः । रुद्रान्तर्यामिभगवत्परत्वं तु युज्यत इति सूचनाय प्रसिद्धेत्युक्तम् । तदुक्तं महाचार्यचरणैः— "ईशानादिशब्दाः 'यः सर्वान्' इत्यादिना योगार्थाभिधानात्तन्मुखेन भगवदभिधायकाः सन्तस्तदभिधायकं प्रणवं बोधयन्ति" इति ॥ (87)

* * * *

[अ०] पञ्चमखण्डस्य भगवत्परत्वमाह—[ समाख्या इत्यादि ]

[मू०] समाख्याः प्रक्रान्तप्रणवविषयिण्यः प्रतिपदं
निरुक्ता रुद्राद्या यदपि हि महादेवशिरसः ।
श्रुतेराथर्वण्याः शिरसि तदिदं तारविभवं
व्यनक्त्योङ्कारः स्यादुपरितनविद्यापरिकरः ॥ (88)

[व्या०] आथर्वण्याः श्रुतेः शिरसि—अथर्वशिरसि । पञ्चमखण्ड इति शेषः । प्रक्रान्तप्रणवविषयिण्यः तुरीयखण्डे परमात्मवाचकतयोक्तप्रणवबोधिन्यः । एकदेशिनेति ज्ञापकात् कर्मधारयादिनिः । रुद्राद्याः रुद्रशब्दप्रभृतयः महदेवशिरसो महादेवशब्दान्ताः । समाख्याः—नामधेयानि । प्रतिपदं पदे पदे । निरुक्ताः प्रत्येकं योगार्थप्रदर्शनेन व्याख्याता इति यत् । तत् रुद्रादिसमाख्यानिर्वचनं कर्तृ । इदं तारस्य प्रणवस्य, विभवं प्राशस्त्यम् । व्यनक्ति—बोधयति । अपिशब्देन रुद्रादिनामधेयवत्तन्निर्वचनमपि न रुद्रपरत्वसाधकमिति सूच्यते । प्रणववाच्यपरमात्मवर्तिनां रुद्रेशानादिशब्द-योगार्थानां तदाश्रयपरमात्मवाचकप्रणवे कीर्तनं प्रणवप्राशस्त्यबोधनार्थमित्यर्थः । (नन्वविहितव्याः स्य,नङ्गस्य प्रणवस्य किं प्राशस्त्यबोधनेनेत्यत्राह) [अनुपयुक्त-प्रणवप्रशंसनमयुक्तमित्यत्राह] ओङ्कार इत्यादि । ओङ्कारः प्रणवः । उपरितनी विद्या—"तदेतदुपासितव्यम्" इति षष्ठखण्डे विधास्यमाना रुद्रशरीरकभग-वदुपासनरूपा विद्या । तस्याः परिकरः अङ्गम् । स्यात्—भवेत् ॥

उपरितनशब्देन सन्निध्याम्नानरूपपाठसादेश्यलक्षणस्थानाख्यविनियोजकप्रमा-णवशात् प्रणवस्य रुद्रशरीरकभगवदुपासनरूपविद्याविशेषाङ्गत्वमवगम्यत इति तत्स्तुत्यर्थत्वं रुद्रादिसमाख्यानिर्वचनस्य युक्तमिति सूच्यते । अर्हत्ववाचिना च स्यादित्यनेन तदभिधाय-कस्य तदुपासननिष्पादनयोग्यतारूपवस्तुसामर्थ्यलक्षणं लिङ्गमुच्यते । अतो लिङ्गस्थानाभ्यां प्रणवस्य प्रकृतविद्यापरिकरत्वसिद्धेस्तत्प्रशंसार्थं समाख्यानिर्वचनमिति, नात्र रुद्रपरत्वावकाश इति भावः । "अथ कस्मादुच्यते ओङ्कारो यस्मादुच्चार्यमाण एव सर्वं शरीरमूर्ध्वमुन्नामयति तस्मादुच्यते ओंकारः" इत्यादिना ओङ्कारप्रणवसर्वव्याप्यनन्ततारसूक्ष्मशुक्लवैद्युतपरब्रह्म-रूपनाम्नां निर्वचनेषु कृतेष्वपि रुद्रादिनामनिर्वचनानामेव पूर्वपक्षावकाशहेतुत्वात्तेषां सिद्धान्ते सौघट्योपपादनावश्यकत्वद्योतनाय 'रुद्राद्या महादेवशिरसः' इत्युक्तम् । अत एवोङ्कारादिनामनिर्वचनानां दृष्टान्तत्वमपि सूच्यते ॥ (88)

* * * *

[ अ० ] षष्ठखण्डं साङ्गसप्रणवरुद्रशरीरकभगवदुपासनविधायकत्वेन व्याचष्टे [ पन्था इत्यादि ]

[मू०] पन्था बन्धस्य शान्तेः पशुपतिभजनं नन्विहाथर्वमूर्ध्नि
प्रोक्तः प्राच्या तदुक्त्या स्फुरति हरिरिहोपासनीयस्तदात्मा ।
यद्वन्मध्वादिविद्यास्वितरसुरतनुःस्रष्टृसृज्यादिभावः
श्रौतस्त्वत्रापि तुल्यश्रुतमिह भसितं प्रस्तुतोपास्ति शेषम् ॥ (89)

[ व्या० ] अथर्वमूर्ध्नि—अथर्वशिरसि । पशुपतिभजनं—स्थापयित्वा तु रुद्रे रुद्र एकत्वमाहू रुद्रं शाश्वतं वै पुराणमित्याद्यनुसारेण सिद्धरुद्रोपासनरूपः । बन्धस्य शान्तेः पन्थाः पाशविमोक्षायेत्युक्तबन्धनिवृत्त्युपायः । इह बुद्धिस्थ-षष्ठखण्डे । प्रोक्तः "तदेतदुपासितव्यम्" इति वाक्येन विहितः । नन्वित्यवधारणे । निर्विहेति च पाठः । विहन्तीति विहा विघातकस्तद्रहितो निर्विहा निष्प्रत्यूह इति तत्रार्थः । पन्थानं बन्धशान्तेः पशुपतिभजनं निर्वहेत्यपि पाठः । निर्वहेति च संस्थानं कल्याकृतिवच्छिष्यं प्रति निर्देशः । रुद्रोपासनमत्र, यद्यपि विहितमेवेत्यर्थः । तथापीति शेषः । तथापि प्रोक्तः उपासनीयः तदात्मा हरिः स्फुरतीत्यन्वयः । इह अथर्वशिरसि उक्तरुद्रोपासने, हरिः भगवान् तदात्मा रुद्रस्यान्तर्यामी सन् उपासनीयः उपास्यः, विषय इति यावत् । प्राच्या तदुक्त्या प्रथमखण्डादिस्थया "सोऽन्तरादन्तरम्" इत्याद्युक्त्या, "यो वै रुद्रःस भगवान्" इत्याद्युक्त्या, "एषो ह देवः" इत्यम्भसि वाक्यसरूपोक्त्या च स्फुरति प्रकाशते । अन्तर्यामित्वेन भगवानेव रुद्रोपासनविषय इति पूर्ववाक्यैरवगतमित्यर्थः । इदमुपलक्षणम्—"येनेदं पञ्चविधं तमीशानं पुरुषं देवमीढम्" इत्युपरितनवाक्यस्यापि ; अत्र हि शासनशब्दो अधितिष्ठतीत्युक्त-योगार्थपरः सन् पुरुषविशेषणम् ; पुरुषशब्दस्तु भगवदसाधारण इत्यपि बोध्यम् । अत्र च "तदेतद्रुद्रचरितम्" इति षष्ठखण्डस्यादिमं वाक्यम् । हृदये सप्रणवं सार्वात्म्यविशिष्टभगवदनुसन्धानं रुद्रेणानुष्ठितमिति तस्यार्थः । एवं च मधुविद्यान्यायेन रुद्रस्य स्वशरीरकभगवदुपासने कर्तृत्वं संभवतीत्याह—यद्वदित्यादिना । मध्वादिविद्यास्वितरसुरतनुर्यद्वत् इतरसुरतनुरिव इह तदात्मा हरिरुपासनीय इत्यन्वयः । मध्वादित्यादिपदेन प्राणविद्यापरिग्रहः ।

"असौ वा आदित्यो देवमधु" इत्यादिना "मामुपास्स्व" इत्यादिना च विहितासु मधुविद्याप्राणविद्यादिषु । इतरसुरतनुरिव— प्रकृतविद्याविषयरुद्रव्यतिरिक्तवस्वादित्येन्द्रादिदेवताशरीरक इव । वस्वादिभिरिवास्यामपि विद्यायां रुद्रेण रुद्रशरीरकः परमात्मैवोपास्य इत्यर्थः । ननु कारणत्वादिश्रुतिबलादत्र स्वातन्त्र्येणोपास्यत्वम् ; नान्तर्यामिप्रकारतयेति चेत्, इन्द्रादीनामपि "इन्द्रो मायाभिः पुरुरूप ईयते" "मामुपास्स्व" "इन्द्रं निन्थिवुः परमे व्योमन्" इति कारणत्वाद्यवगमात् स्वातन्त्र्येणोपास्यत्वं स्यात् । ननु तेषां कार्यत्वावगमान्न स्वातन्त्र्येणोपास्यत्वमिति चेत्, अस्यापि कार्यत्वावगमान्न स्वातन्त्र्येणोपास्यत्वमिति तुल्यमित्याह—स्रष्टृसृज्यादिभाव इत्यादिना ; श्रौतः श्रुत्युक्तः । स्रष्टृसृज्यादिभावः कारणत्वकार्यत्वादिकम् । आदिशब्देन संहार्यत्वादिपरिग्रहः । अत्रापि तुल्यः—रुद्रेऽपि समानमित्यर्थः । तुशब्दश्च भगवदुत्पत्तेरवतारत्वश्रवणाद्वैषम्यसूचकः । अत्र च पन्था इत्यनेन 'अयं पन्था विततम्' इति वाक्यं सूच्यते । 'व्रतमेतत् पाशुपतम्' इति वाक्यस्य पाशुपतशब्दस्य पशुपतिरूपपरमात्मोपासनाङ्गतया पशुपतिसंबन्धमित्यर्थाभिप्रायेण पशुपतिभजनमित्युक्तम् । "तस्मादुपसंहर्त्रे महाग्रासाय नमो नमः" इति वाक्याभिप्रायेण हरिरित्युक्तम् । "मध्वादिशब्देनास्या अपि विद्यायाः संग्रह इति सूचनाय यद्वन्मध्वादिविद्यास्वित्युक्तम् । एवमङ्गिविध्यंशो व्याख्यातः । अङ्गविधिं व्याचष्टे—श्रुतमित्यादिना । इह श्रुतं भसितं व्रतमेतत् 'पाशुपतम्' "अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, सर्वं हवा इदं भस्म, मन एतानि चक्षूंषि भस्म, अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्तस्माद्व्रतमेतत् पाशुपतं पाशविमोक्षाय" इति अथर्वशिरसि श्रुतं भस्मग्रहणम् । प्रस्तुतोपास्तिशेषम्----रुद्रशरीरकपरमात्मोपासनरूपप्रकृतविद्याङ्गं भवति । संबन्धमनुवर्तत इति संबन्धशब्दवत् घञन्तत्वेऽपि शेषशब्दस्य नपुंसकत्वम् । अत्र च प्रस्तुतोपास्तीति प्रस्तुतपदेन प्रकरणाख्यविनियोजकप्रमाणं सूचितम् ।

प्रकरणं नाम—सन्निहितस्य फलवतोऽनवगताङ्गतास्मपदार्थविषयेतिकर्तव्यतात्वेनापेक्षणम् । रुद्रशरीरकभगवदुपासनस्य च सन्निहितत्वात् "शान्तिमत्यन्तमेति"

इति फलवत्त्वाच्च श्रुत्यादित्रयाविषयत्वात् क्रियारूपत्वाच्च भस्मग्रहणस्येतिकर्तव्यतात्वेनापेक्षणमस्तीति भस्मग्रहणं प्रकरणात् रुद्रशरीरकपरमात्मोपासनाङ्गमित्यर्थः। इह श्रुतं भसितमित्यनेन पाशुपततन्त्रोक्तभस्मग्रहणं व्युदस्यते तद्व्युदासश्च श्रुतिस्थपाशुपतशब्देन कृतः। न च पाशुपतशब्दस्य पाशुपततन्त्रोक्तपरता, लक्षणापत्तेः। नापि तद्धितेन तदभिधानम् "वृद्धाच्छः" इति छप्रत्ययापत्तेः, तद्धितद्वयकल्पनायां गौरवापत्तेश्च। अतः पशुपतिरूपपरमात्मोपासकाङ्गतया पशुपतिसंबन्धं पाशुपतमिति सुदर्शनभट्टपादाः। तदेतद्रुद्रचरितमित्यङ्ग्युपक्रमात् पाशुपतं पशुपतिनानुष्ठितमिति महाचार्यः। पक्षद्वयेऽपि 'तस्येदम्' इत्यण्प्रत्ययः। प्रकरणाच्च विशेषावगमः। त्यदादीनां तत्तत्प्रकारकबोधजनकत्वाद्वा विशेषावगमः। न च 'सास्य देवता' इति देवतार्थकोऽयमण्प्रत्यय इति शङ्क्यम्। त्यज्यमानहविरुद्देश्यत्वमन्त्रस्तुत्यत्वात्मकदेवतात्वस्य हविर्मन्त्रवृत्तिप्रतिसंबन्धिताकत्वेन, भस्माग्रहणरूपकर्मविशेषस्य देवताप्रतिसंबन्धित्वाभावेन देवतार्थकाण्प्रत्ययासंभवात्। "शान्तिमत्यन्तमेति" इत्युक्ताङ्गिफलम् "पाशविमोक्षाय" इत्यङ्गे प्रशंसार्थं कीर्तितम्। तथा च पाशुपततन्त्रोक्तव्रताङ्गत्वाभावाच्च प्रकृतविद्यायां रुद्रस्य स्वातन्त्र्येणोपास्यत्वमिति भावः। इदमेव व्रतं कालाग्निरुद्रोपनिषदि प्रतिपाद्यते। अतः सापि भगवदुपासनाङ्गविधिपरतया भगवत्परैवेति महाचार्याः। अतो न रुद्रपरत्वमस्या इति ॥ (89)

* * * *

[अव०] ननु भस्मग्रहणस्य

"मद्यं पीत्वा गुरुदारांश्च गत्वा
स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा।
भस्मच्छन्नो भस्मशय्याशयानो
रुद्राध्यायी मुच्यते सर्वपापैः ॥"

इति शातातपस्मृतौ सर्वपापक्षयहेतुत्वस्मरणात् पापक्षयस्य सर्वब्रह्मविद्यापेक्षितत्वादपेक्षालक्षणवस्तुसामर्थ्यलिङ्गेन प्रकरणं बाधित्वा सर्वब्रह्मविद्यार्थत्वमेवोपगन्तव्यम्। अत एव "तमेतं वेदानुवचनेन" इत्यत्र दहरविद्यायाः प्रकृतत्वेऽपि, "धर्मेण पापमपनुदति" इति श्रुतिप्रतिपन्नस्य कर्मजन्यस्य पापक्षयरूपद्वारस्य सर्वविद्यापेक्षितत्वाद्यज्ञादिकर्मणां सर्वविद्यासाधारण्यम्। तथा "तस्मादेवंविच्छान्तो दान्तः" इत्यादिश्रुतौ प्रकृतविद्यापरामर्शकैवंविच्छब्दे सत्यपि, शमदमसाध-

चित्तैकाग्र्यादेः सर्वविद्यापेक्षितत्वादेव, सर्वविद्यासाधारण्यमुपेतं इत्याशङ्क्यं यदि प्रकरणपठितानामप्यपेक्षामात्रेण सर्वसाधारण्यं तर्हि दर्शपूर्णमास-प्रकरणपठितानां व्रीहिप्रोक्षणावघातादीनां सन्निपत्याङ्गानाम् "वर्म वा एतद्यज्ञस्य क्रियते" इत्याद्यर्थवादप्रतिपन्नयागापेक्षितोपकारजनकानां प्रयाजाद्यङ्गा-नामप्युपदेशत एव सर्वयागसाधारण्यप्रसङ्गः; "यज्ञेन दानेन" इत्यादिस्थले तु "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इत्यादिसर्वविद्यासाधारण्यप्रति-पादकशास्त्रान्तरवशेन सर्वविद्यासाधारण्यसिद्धावपि, अन्यत्र तथात्वे प्रमाणा-भावात् । शमादिस्थलेऽपि शमाद्येकसाध्यचित्तैकाग्र्यसाध्यत्वाद्ब्रह्मोपासनस्य, शमादेः सर्वविद्यासाधारण्यम् । ब्रह्मविद्यापेक्षितपापक्षयस्य तु भस्मोद्धूलनैकसाध्यत्वे प्रमाणाभावाद्भस्मोद्धूलनस्य न सर्वब्रह्मविद्याङ्गत्वमिति परिहाराभिप्रायेणाह— [प्रस्तुत्येत्यादि]

[मू० ] प्रस्तुत्य रुद्रवपुषः पुरुषोत्तमस्य
विद्यामथर्वशिरसीरितमङ्गमस्याः ।
भस्मप्रसक्तिरितरत्न न चास्ति यद्वत्
सौत्रामणिप्रकरणोक्तसुराग्रहस्य ॥ (90)

[व्या० ] अथर्वशिरसि, षष्ठखण्ड इति शेषः । रुद्रवपुषः रुद्रशरीरकस्य । पुरुषो-त्तमस्य भगवतः । विद्याम्—उपासनम् । प्रस्तुत्य "तदेतदुपासित-व्यम्" इति पूर्ववाक्येन विधाय । ईरितम् । 'अग्निः' इत्यादिना, 'भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्' इत्यादिना विहितम् । भस्मास्याः अङ्गं रुद्रशरीरकपरमात्मोपासनरूपप्रकृतविद्याङ्गं, भवति । सौत्रामणिप्रकरणे— सौत्रामण्याख्ययागविशेषप्रकरणे, उक्तस्य विहितस्य, सुराग्रहस्य यद्वत्सुराग्रह-स्येव । इतरत्न स्वप्रकरणिनोऽन्यत्र प्रसक्तिः नास्ति भस्मनः अङ्गत्वापत्तिर्नास्ति तत्तत्प्रकरणगृहीतानामन्यत्राङ्गत्वप्रसक्तिर्नास्ति हीत्यर्थः । चकारेण दर्शपूर्णमास-प्रकरणगृहीतप्रयाजादयो दृष्टान्तत्वेन समुच्चीयन्ते । अत्र रुद्रवपुषः पुरुषोत्तम-स्येत्यनेन "तमीशानं पुरुषं देवमीड्यम्" "बुद्ध्या संचिन्त्य स्थापयित्वा तु रुद्रे" इत्यनयोर्वाक्ययोरर्थः स्मारितः ॥ (90)

* * * *

[ अव० ] एवमेकादशभिः श्लोकैरथर्वशिरसो भगवत्परत्वमुपपादितम् । अथाथर्वशिखाया भगवत्परत्वमुपपाद्यते । तत्र "स्रष्टृसृज्यादिभावः श्रौतस्त्वत्रापि तुल्यः" इत्यत्र तुशब्दाभिप्रेतं भगवदुत्पत्तेरवतारत्वं विव्रियते—[आथर्वण्यामित्यादि ]

[ मू० ] आथर्वण्यां शिखायामगणि भगवतो या जनिः कारणैक-
ध्येयत्वेदंपरायां जगदुपकृतये सोऽयमिच्छावतारः ।
यद्विष्णोः कारणैकप्रवणफणितिभिः कारणत्वोपदेशः
स्पष्टो दृष्टप्रयोगः सुखजनकतया शम्भुशब्दोऽपि तस्मिन् ॥ (91)

[ व्या० ] अथर्वशिखायां पैप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणमूचुः—भगवन् किमादौ प्रयुक्ता ध्यानं ध्यायितव्यं किं तद्ध्यानं को वा ध्याता कश्च ध्येय इति श्रूयते । अत्राद्यः प्रश्नो ध्यानमात्रविषयः ; द्वितीयो ध्यानाभिमानिदेवताप्रश्नः ; तृतीयो ध्यात्रभिमानिदेवताप्रश्नः ; तुरीयः सविशेषणध्येयप्रश्नः । तत्राद्यप्रश्नस्योत्तरम् ओमित्येतदक्षरम् आदौ प्रयुक्तं ध्यानं ध्यायितव्यमिति ; द्वितीयस्योत्तरं सर्वकरणानि च मनसि संप्रतिष्ठाप्य ध्यानं विष्णुरिति ; तृतीयस्योत्तरं मनसि सह करणैः संप्रतिष्ठाप्य ध्याता रुद्र इति तुरीयस्योत्तरमीशानं प्रध्यायितव्यं सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते । सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां ध्याता धाता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये ध्येय इति ॥

अत्र महाचार्याः—"चतुर्थप्रश्नस्योत्तरमाह—"ईशानं प्रध्यायितव्यम्" इति । "कश्च ध्येयः" इति प्रश्नसारूप्यात् पूर्वप्रश्नोत्तरवदिदमेव चतुर्थप्रश्नोत्तरम् । न तु ध्यायीतेशानमिति । प्रश्नवैरूप्यात् पूर्वप्रश्नोत्तरवैरूप्याच्च । ईशान इति पुलिङ्गनिर्देशो कृते देवतान्तरस्य बुद्धौ विपरिवृत्त्या परमात्मबुद्धिप्रतिबन्धो भवितेति नपुंसकलिङ्गनिर्देशःकृतः । ईशितव्यविशेषानिर्देशात् सर्वेशानं वस्तु ध्यातव्यमित्यर्थः । प्रधानेषु प्राधान्यमुपास्यस्य वक्तुं ब्रह्मादीनां प्राधान्यमाह— "सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्राः" इति इदंप्रमाणसिद्धं सर्वमपि ब्रह्मविष्णुरुद्रेन्द्राः राजा राष्ट्रमितिवन्निर्वाह्यनिर्वाहकभावनिबन्धनं सामानाधिकरण्यम् । ते सर्वे संप्रसूयन्त इति वाक्यान्तरम् । एवं सति तच्छब्दस्य प्रयोजनलाभः । भगवतः प्राधान्यं व्यञ्जयितुम् इदमुत्तरवाक्ये चैषु भगवतः प्रसूत्यभावस्य वक्ष्यमाणत्वात्तद्वत्तेषु तदन्यस्यापि

कस्यचित्तदाशङ्का मा भूदिति सर्व इत्युक्तम् । एवं सत्येव ह्यस्य प्रयोजनलाभः । न च सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रा इत्युक्तराशिद्वयपरामर्शितया ते सर्वे इत्यस्य प्रयोजनलाभः । चकाराभावेन ते सर्वे इति समुदायपरामर्शस्यापेक्षितत्वादिति वाच्यम् । नपुंसकशेषापत्तेरिन्द्रियादिसहपाठात्तत्तुल्या परायत्ता प्रसूतिर्ब्रह्मादेरिति स्वरसतोऽवगम्यते । भगवतः प्रसूतिं निषेधति—"न कारणं कारणानां ध्याता धाता" इति कारणानां त्रयाणां मध्ये कारणं ध्याता धाता न प्रसूयत इति विपरिणामोऽनुषङ्गः । विपरिणामेनानुषङ्गः परपक्षेऽपि समानः । कारणं ध्यातेति कारणावस्थाया ध्यातृत्वेन प्रसिद्ध इत्यवगम्यते । तथा प्रसिद्धश्च "भगवानेव नारायणोऽकामयत" "सोऽन्यं कामं मनसा ध्यायीत" इति धातृशब्दश्च 'अणोरणीयान्' इत्यत्र भगवत्परतया शङ्खलिखितोपबृंहिते प्रसिद्धः । सहस्रनामसु च "अनादिनिधनो धाता" इति ॥

कारणमिति शेषषष्ठ्येवास्तु । अर्थात्तु निर्धारणलाभः । अथवा, मा भूदर्थान्निर्धारणलाभः । विष्णोरपि संप्रसूतिरेव प्रतिपाद्यताम् । सा च प्रसूतिः, "अजायमानो बहुधा विजायते । तस्य धीराः परिजानन्ति योनिम्" "न सा कर्मनिमित्तजा" "जननं स्वेच्छयैव च" इत्यादिप्रतिपन्ना स्वाधीना न तु ब्रह्मरुद्रादिवत् कर्माधीना । यद्वा नात्र विपरिणामः कार्यः । नापि धातृशब्दस्य प्रसिद्धार्थत्यागः । ध्याता चतुर्मुखो ध्याता रुद्रश्च कारणानां कारणमित्यर्थः । विष्णुरेव कारणमिति भावः । ध्याता रुद्र इति प्रागभिधानात् धातृदेवता रुद्रो ध्यातेत्यभिधीयते । यद्वा नात्र कस्याप्युत्पत्तिः प्रतिपाद्यते । संप्रसूयन्त इति 'षूञ् प्रेरणे' इति धातोः कर्मणि लकारे रूपम् । न तु 'षूञ् प्राणिप्रसवे' इत्यस्य' 'षूञ् प्राणिगर्भविमोचने' इत्यस्य वा तस्य प्राणविषयतया सर्वाणि चेन्द्रियाणि सह भूतैरित्यत्रानुषङ्गिणोऽप्यन्वयायोगात् । जायन्त इत्यध्याहारप्रसङ्गात् । ईशानं प्रध्यायितव्यमिति पूर्ववाक्ये असंकोचलब्धसर्वेश्वरत्वस्य साक्षादुपपादकतया प्रेरणार्थस्यैव धातोरत्र ग्राह्यत्वाच्च । परमकारणभूतो ध्याता धाता तु न केनचित् प्रेर्यत इति न कारणमित्यादिवाक्यस्यार्थः । "कश्च ध्येयः" इत्यत्र ध्येयविशेषणस्यापि विवक्षितत्वात् ध्यातव्यस्य हृदयाधिकरणं विदधाति । "कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये" इति । सर्वैश्वर्यसंपन्न इत्यत्र सर्वं च तदैश्वर्यं चेति कर्मधारयः । न तु सर्वेश्वरशब्दात् षष्ठीसमासात् ष्यञ् । आदिवृद्धिप्रसङ्गात् । सर्वप्रकारमीश्वरमीशानं विवक्षितम् । अस्ति च नियमने प्रकारभेदः । यथान्तः प्रविश्य नियमनं राजादेरिव

बहिः स्थित्वा नियमनं धारणप्रवृत्त्यादिविषयं च सद्वारमद्वारकं च। इदं च सर्वप्रकारकमैश्वर्यं न कतिपयविषयमित्युच्यते सर्वेश्वर इति। एवं च सर्वैश्वर्यसंपन्नसर्वेश्वरशब्दयोरैकार्थ्यभ्रमात् सर्वेश्वरशब्दे तच्छब्दवाच्यलक्षणामाश्रित्य पौनरुक्त्यपरिहारः केनचित् कृतो निरस्तः। वस्तुवृत्तमुक्तम् तथात्वेऽपि सिद्धान्ते न दोषः सर्वेश्वरशब्दस्य देवतान्तरे रूढ्यसिद्धेः। इहैव कल्पनायां भगवत्येवास्तु। अत्र च सर्वाणीन्द्रियाणीति पृथगिन्द्रियग्रहणमिन्द्रियप्रेरणरूपम् हृषीकेशशब्दार्थं नारायणत्वलिङ्गमुपस्थापयितुम्। यद्वा "कारणं तु ध्येयः" इति चतुर्थप्रश्नस्योत्तरम्; उपोद्घातरीत्या तदुपपादनाय "ईशानं प्रध्यायितव्यम्" इति सर्वेशितुरेव मोक्षप्रदानसामर्थ्यत्तस्यैवोपास्यत्वं युक्तमिति भावः। "कारणं तु ध्येयः" इत्यत्र कारणपदं सर्वकारणपरं त्रिमूर्तिकारणपरं वा। भगवत एव त्रिमूर्तिकारणत्वं च, सुबालोपनिषदि कार्येषु स्थितिप्रतिपादकपर्यायेषु त्रिमूर्तिषु स्थितिश्रवणात्, पैङ्गिरहस्ये—"यमवरुणविष्णुरुद्रेन्द्राः" इति श्रवणाच्च प्रसिद्धम्। तस्मादत्र सुबालोपनिषदि प्रसिद्धिकारणत्वानुवादेन भगवत एव ध्यातव्यत्वं विधीयते। शंभुशब्दश्चाभिधानकोशादिषु भगवदभिधानतया सुप्रसिद्धः। शंभुर्धातृहरीशेष्वित्यादिना सुबालोपनिषत्तापनीयादिषु भगवति सर्वेश्वरत्वावगमात् तत्समानाधिकृतः शम्भुशब्दो भगवत्पर एव। न तु रुद्र एव स्वारस्यमिति चेत्—सत्यम्। तत्तु त्रिमूर्त्यन्तर्गत एव तत्परिग्रहश्चानुपपन्नः। सृज्यत्वानपहतपात्मत्वयोः श्रवणात्। परानभिमतश्च तत्परिग्रहः। अतो भगवत एव परिग्रहो युक्तः। विष्णोः सर्गश्रवणेऽपि "अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्" इत्यवतारत्वावगमान्न स पराधीन इति व्याचख्युः॥

तदिदमुच्यते—आथर्वण्यामित्यादिना। कारणस्य यदेकं ध्येयत्वं तस्मिन्निदंपरायां तात्पर्यवत्यां, पुरुषसूक्तादिप्रसिद्धकारणत्वानुवादेन ध्यातव्यताविधिपरायामित्यर्थः। एकशब्दश्च ध्येयतायां तात्पर्यातिरेकव्यञ्जनार्थः। तदाहुर्भट्टसुदर्शनपादाः—"अस्य प्रकरणस्य 'कश्च ध्येयः' इत्युपक्रम्य 'कारणं तु ध्येय" इत्यनेन कारणत्वमनूद्य ध्येयविधिपरत्वावगमात् पुरुषसूक्तादिप्रतिपन्नस्यैव भगवतो ध्येयत्वविधानपरमिदं वाक्यम्" इति। आथर्वण्यां शिखायाम्—अथर्वशिखायाम्। भगवतो या जनिरगणि—निर्दोषकल्याणगुणाकरस्य नारायणस्य यज्जन्म बोधितम्, "सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते" इत्यनेन या भगवतोऽप्युत्पत्तिर्बोधितेत्यर्थः। सोऽयम्—"अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्" "येन सूर्यस्तपति तेजसेद्धः" पिता पुत्रेण "पितृमान्योनियोनौ" इत्यादिप्रापकवाक्यप्रसिद्धो ध्येय-

विधिपरायामस्यामितरसृज्यसजातीयतयावतीर्णस्य उपासकसौलभ्यप्रज्ञापनार्थमनूदितश्चोद्भवः। जगदुपकृतये—"जगतामुपकाराय" इत्युक्तसाधुपरित्राणादिरूपजगदुपकारप्रयोजकः भगवत इच्छावतारः—भगवतः स्वेच्छाहेतुकः प्रादुर्भाव इत्यर्थः। इच्छापदेन जीवोत्पत्तिवत् कर्ममूलकत्वमस्य नेत्युच्यते। "संभवाम्यात्ममायया" "जननं स्वेच्छयैव च" इत्यादिकमभिप्रेत्य इच्छावतार इत्युक्तम्। विधेयलिङ्गानुसारात् सोऽयमिति निर्देशः। ध्येयत्वविध्युपयोगी चायं भगवतो जन्मानुवादः "अजायमानः" इत्यादिपुरोवादप्राप्ताव-वतारानुवादकः सौलभ्यज्ञापनार्थ इति भावः। यत्—यस्मात् एकस्मिन्, प्रवणाभिः तात्पर्यवतीभिः, फणितिभिः पुरुषसूक्तसुबालोपनिषत्पैङ्गिरहस्यादिभिः उपनिषद्भिः। विष्णोः कारणत्वोपदेशः—भगवतः कारणत्वविधानम्। स्पष्टः स्फुटम्। वनषण संभक्तौ। संभक्तिः प्रार्थनम्। अनेन च तात्पर्यं विवक्ष्यते। तस्मिन् कारणत्वेन श्रुत्युक्ते भगवति शंभुशब्दोऽपि सुखजनकतया शं सुखं भावयतीति व्युत्प-त्तिसिद्धसुखजनकत्वरूपयोगार्थेन दृष्टप्रयोगः "शृणु मे वचनं शंभो पितामहपितामह" इत्याद्युपबृंहणेषु, "विश्वाक्षं विश्वशंभुवम्" इत्यादिश्रुतौ च श्रुतप्रयोगो भवति। तस्मात् कारणशंभुशब्दादिना भगवन्तमनूद्य तस्य ध्येयत्वपरेऽस्मिन् भगवतो जन्मश्रवण-मवताररूपजन्मानुवादकमित्यर्थः।

तदिदमुक्तं भट्टसुदर्शनपादैः—"न च शंभुः कारणमिति वाक्यवृत्तिः, किं तु कारणं शंभुर्ध्येय इति। अन्यथा कश्च ध्येय(त्व) इत्युत्तरत्वायोगात्। शंभुशब्दस्या-साधारण्येऽपि आकाशप्राणादिवत् परमात्मपरत्वं न्याय्यम्। न चायमसाधारणः "शंभुः स्वयंभूर्द्रुहिणः" इति नामपाठात्" इत्यादिना। (क्षिप्रसूल्बिाद्रसंज्ञायामिति प्रकरणे) "मितद्र्वादिभ्य उपसंख्यानम्" इति वार्तिकेन शंभुशब्दो डुप्रत्ययान्ततया व्युत्पादितो वैयाकारणैः। "मितं द्रवतीति मितद्रुः। शतद्रुः शंभुः, अन्तर्भावितण्यर्थोऽत्र भवतिः" इति। गुणयोगनिमित्तकोऽप्ययं शुम्भुशब्दः शिवशब्दवत्। तथा च प्रयुज्यते "स्वयंभूः शंभुरंभोजलोचने त्वत्पयोधरः। नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति॥" इति। विशिष्यैव च भगवत्यभिधानकोशेन सहप्रयोगोऽस्य दर्शितः। अपर्यवसानवृत्त्या भगवत्परत्वमपि संभवति अतो भगवत्परैवेयम् अथर्वशिखेति॥ (91)

* * * *

[ अव० ] शंभुशब्दस्यापर्यवसानवृत्त्या भगवत्परत्वमिति पक्षे त्वथर्वशिरसीवाथर्वशिखाया-मपि रुद्रशरीरकपरमात्मोपासनमेव विधीयत (इत्यत्राह) [इत्याह]—[उदित-मित्यादि]

[ मू० ] उदितमुपासनद्वयमथर्वशिरश्शिखयोः
स्फुटमपुनर्भवाय पुरवैरिकलेवरिणः ।
कमलदृशः क्वचित् क्वचन कारणतत्त्वपर-
श्रुतिविहितस्य हार्दसुषिमध्यजुषो विदुषः ॥ (92)

[ व्या० ] अथर्वशिरश्शिखयोः—अथर्वशिरसि, अथर्वशिखायां च । अपुनर्भवाय—मोक्षाय उदितम् उक्तम्, विहितमिति यावत् । उपासनद्वयम्—"तदेतदुपासितव्यम्" "शंभुराकाशमध्ये ध्येयः" इत्युक्तमुपासनद्वयम् । क्वचित् क्वचन कारणतत्त्वपरश्रुतिविहितस्य । क्वचित् क्वचन—क्वचित् क्वचित् नारायणानुवाकमहोपनिषत्सुबालोपनिषदादिषु, कारणतत्त्वपराभिः उपासनविध्याद्यन्यपरतागन्धविधुरतया कारणवस्तुप्रतिपादिकाभिः, कारणयाथात्म्यप्रतिपादिकाभिर्वा, श्रुतिभिः "स ब्रह्मा स शिवः सेन्द्रः" इत्यादिकाभिः, विहितस्य तत्तच्छरीरकतया तत्तद्विद्योपास्यतया बोधितस्य । विदुषो हार्दसुषिमध्यजुषः—उपासकहृदयविवरमध्यगतस्य । "रन्ध्रं श्वभ्रं वपा सुषिः" इति कोशः । 'जुषी प्रीतिसेवनयोः' इत्यस्मात् क्विप् । पुरवैरिकलेवरिणः—रुद्रशरीरकस्य । मनुष्याद्यपेक्षया प्राशस्त्यविवक्षया तु रुद्रस्य कर्मधारयादिनिः प्रयुक्तः । "न कर्मधारयात्" इति निषेधस्तु नात्र भवति । बहुव्रीहिणा समानार्थकस्य संबन्धमात्रवाचिनो मत्वर्थीयस्यैव निषेधो न तु प्रशंसाद्यर्थविशेषविवक्षाधीनस्येति वैयाकरणैरुक्तत्वात् । कमलदृशः पुण्डरीकाक्षस्येति । स्फुटम्—रुद्रशरीरकभगवद्विषयकमिति स्पष्टम् । अत्र च कारणस्यैव ध्यातव्यत्वविधानात्, भगवत एव च कारणतया श्रुत्यन्तरबोधितत्वात्, प्रसिद्धरुद्रस्य च सृज्यत्वादिश्रवणात्, अवतारश्रुतेश्चातत्परत्वात्, भगवतश्च सर्वविद्योपास्यत्वेनानन्यपरनारायणानुवाकसिद्धत्वात्, "पद्मकोशप्रतीकाशं हृदयम्" इत्यादिनावगतस्य च हृदयमध्योपास्यत्वस्यात्राकाशमध्ये ध्येय इति प्रत्यभिज्ञानात्, "स यश्चायं

पुरुषे । यश्चासावादित्ये । स एकः" इत्यादिना पुरुषान्तर्वर्तिनश्चादित्यमण्डलान्तर्वर्तिनैक्यावगमात्, तस्य च पुण्डरीकाक्षत्वश्रवणात् भगवानेवात्र रुद्रशरीरकतयोपास्य इति स्फुटं प्रतीयत इत्यर्थः ॥

अत्राथर्वशिरोग्रहणं दृष्टान्तार्थम्; तदुक्तोपासनस्य रुद्रान्तर्यामिभगवद्विषयकत्वस्य प्रतिपादितत्वात् । तच्च "ध्याता रुद्रः" इति रुद्रस्यैव ध्यातृत्वेऽपि मधुविद्यान्यायेन तच्छरीरकस्य परमात्मनो ध्येयत्वं न विरुध्यत इति स्फोरणाय । अत्र च रुद्रशरीरकपरमात्मन एव वेद्यत्वेऽपि सर्वैश्वर्यादिगुणभेदाद्विद्याभेद इत्यभिप्रायेण उपासनद्वयमित्युक्तम् । "एतामधीत्य द्विजो गर्भवासाद्विमुक्तो विमुच्यते" इति वाक्यसिद्धार्थाभिप्रायेणापुनर्भवायेत्युक्तम् ॥

"विष्णुरात्मा भगवतो भवस्यामिततेजसः ।
तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरः ॥"

इति वचनस्मारणेन रुद्रस्य भगवदन्तर्यामिकत्वं बहुप्रमाणसिद्धमिति व्यञ्जनाय पुरवैरिकलेबरिणि इत्युक्तम् । "आकाशमध्ये ध्येयः" इति पुरुषान्तर्यामित्वावगमात् तस्य चादित्यमण्डलान्तर्वर्तिना ऐक्यावगमात् तस्य च पुण्डरीकाक्षत्वं श्रुतमिति भगवानेवात्र ध्येयतया सिध्यतीत्यभिप्रायेण कमलदृश इत्युक्तम् । हृदयमध्यगतत्वमनन्यपरनारायणानुवाकेन भगवन्निष्ठतयावगतमिति तस्यात्र "आकाशमध्ये ध्येयः" इत्यनेनोक्तत्वात् भगवत एवात्र ध्येयत्वं सिध्यतीत्यभिप्रायेण विदुषो हार्दसुषिमध्यजुष इत्युक्तम् ॥ (92)

*　　*　　*　　*

[अव०] "ततो यदुत्तरतरम्" "तस्मिन् यदन्तः" इति श्रुतिलिङ्गाभ्यां देवतान्तरस्य भगवदपेक्षयोत्कर्षप्रतिपादनं तयोरतत्परत्वोपपादनेन निरस्तम् "यत्संज्ञामूर्तिकर्तुः" "प्रस्तुत्यामृतहेतुम्" इत्यादिश्लोकद्वये । तत्र-सञ्ज्ञाच्चाथर्वशिरश्शिखयोरतत्परत्वोपपादनेन भगवत्परत्वमुपपादितम् "यद्दैवैः" इत्यादिभिः । इदानीं समाख्यया तदाशङ्क्य श्रुत्यादिबलवन्मानबाधिता समाख्या नार्थनिश्चयकरीति समाख्यावलम्बिनं पूर्वपक्षं निरस्यति त्रिभिः श्लोकैः ॥

अयं हि स पूर्वपक्षः; सोपपदनिरुपपदपुरुषशब्दवाच्यात्तथाविधे[श्वर]शब्दवाच्यस्य प्रकर्षः। पुरुषशब्दो हि जीवसाधारणो भगवति प्रयुज्यते। महत्त्वविशेषितश्च तस्मिन् प्रयुज्यते। ईश्वरमहेश्वरशब्दौ च रुद्रे प्रयुज्येते। पुरुषपदं च निकर्षयुक्तजीवसाधारणं भगवति प्रयुज्यमानं तद्वदेव भगवत्यपि निकर्षमापादयति। ईश्वरपदं तु सर्वजीवव्यावृत्तं पुरुषत्वादुत्कृष्टमेवैश्वर्यं बोधयति। महच्छब्दविशेषितं तु तस्य महत्त्वं बोधयति। तथा च पुरुषमात्राद्भगवतो रुद्रस्य महेश्वरस्योत्कर्षः समुचित इति। तमिमं पूर्वपक्षमाह—[उक्तमित्यादि]

[मू०] उक्तं केनचिदीश्वरः पुरुष इत्युक्ती शिवश्रीशयो-
र्वर्तेते बहुशो महत्परमवाग्युक्ते वियुक्ते अपि।
इत्युत्कर्षनिकर्षगोचरपदव्याख्यातयोरेतयो-
रुत्कर्षो गिरिशस्य वक्तुमुचितः पुंसः प्रधानादिव॥ (93)

[व्या०] महच्च परमं चेति महत्परमे; शब्दस्वरूपापेक्षया क्लीबयोरितरेतरयोगः। महत्परमे च ते वाचौ च महत्परमवाचौ; शब्दस्वरूपपरतायाम् "[1] बन्धुनि बहुव्रीहौ" इत्यत्रेव नित्यनपुंसकलिङ्गत्वादेव स्त्रीलिङ्गविशेषणत्वेऽपि न स्त्रीत्वम्। इतरथा हि महती परमेति स्यात्। समानाधिकरणोत्तरपदपरतया भावे नपुंसकभावाप्रवृत्तेः। ताभ्यां युक्ते तत्समभिव्याहृते, वियुक्ते अपि, बुद्धिस्थत्वान्महत्परमशब्दाभ्यां असमभिव्याहृते केवले इति यावत्। ईश्वरः पुरुष इत्युक्ती ईश्वरपुरुषशब्दौ 'ईश्वरः महेश्वरः परमेश्वरः, पुरुषो महापुरुषः परमपुरुषः' इति रूपेण बहुशः—प्रचुरं, वर्तनक्रियापेक्षया शस्प्रत्ययः। शिवश्रीशयोर्वर्तेते—शिवविष्ण्वोः प्रयुज्येते। शक्त्या तद्वाचकौ भवत इत्यर्थः। इति हेतोः उत्कर्षनिकर्षगोचरपदैः क्रमेण ईश्वरमहेश्वरपरमेश्वरशब्दरूपोत्कर्षबोधकपदैः, पुरुषमहापुरुषपरमपुरुषशब्दरूपनिकर्षबोधकपदैश्च, व्याख्यातयोर्विशेषेण प्रचुरमाख्यातयोः व्यवहृतयोः। विशब्देन तयोः क्रमेण पुरुषेश्वरादिपदैः काचित्कव्यवहारेऽपि न दोष इति सूच्यते। एतयोः—शिवश्रीशयोर्मध्ये। निर्धारणे

---

1 पा. सू. ६-१-१४।

सप्तमी । अन्वादेशस्याविवक्षितत्वादेनादेशविरहः । **प्रधानादिव अचेतनभूतायाः** प्रकृतेरिव तत्सहपठितात् **पुंसः** पुरुषात्, **प्रधानपुरुषाविति** प्रधानसहपठित-पुरुषशब्दवाच्यात् भगवत **उत्कर्षो गिरिशस्य** रुद्रस्य, **वक्तुमुचितः** अर्हः । " गिरौ डश्छन्दसि " इति गिरिशशब्दस्य छन्दोविषयत्वेऽपि " गिरिशमुपचचार प्रत्यहं सा सुकेशी" इति प्रयुक्तत्वात् मत्वर्थीयशप्रत्ययान्तत्वमित्युक्तम् । अत्रेश्वरादिपदानामुत्कर्षगोचरत्वमुत्कर्षबोधकत्वमुत्कर्षव्यञ्जकत्वं च । पुरुषादिपदानां निकर्षगोचरत्वं तु निकर्षव्यञ्जकत्वरूपम् । ईश्वरत्वं हि उत्कर्षरूपमुत्कर्षावहं च । पुंस्त्वं तु न निकर्षरूपं, किं त्वनीश्वरवृत्तितया निकर्षसमानाधिकरणम् । तथा च तद्वाचकपदवाच्यतायास्तद्गतोत्कर्षापकर्षसजातीयोत्कर्षापकर्षगमकत्वाज्जीववाचकपुरुषपदवाच्यस्य जीवान्तरवदीश्वरावधिकनिकर्षसिद्धिः । महासचिवशब्दस्य सचिवान्तरापेक्षया महत्त्वबोधकत्वेऽपि राजहाराजशब्दोक्तराजापेक्षया यथापकर्षः; तथा महापुरुषशब्दवाच्यस्य पुरुषान्तरापेक्षयोत्कर्षेऽपीश्वरापेक्षया निकर्ष इत्यर्थः । **इति केनचिदुक्तम्**—नामग्रहणानर्हेण केनाप्युक्तमित्यर्थः ॥ (93)

अत्रायं सिद्धान्तः—श्रुतिलिङ्गादिषु मिथो विरोधे पूर्वपूर्वस्य कल्प्यप्रमाणप्रतिबन्धकत्वरूपमुत्तरोत्तरबाधकत्वम् । विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे । यथा ऐन्द्रिमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्च ऐन्द्राङ्गत्वे । यथा वा एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये । यथा गार्हपत्ये श्रुत्या ऐन्द्रीमन्त्रो लिङ्गादाग्नेयः । एवमुत्तरत्रापि विरोधो द्रष्टव्यः । अत्र च सर्वत्र उत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वेन प्रामाण्याद्भिन्नविषयेण पूर्वपूर्वेण बलीसेन शेषशेषिणोर्निराकाङ्क्षत्वापादनेन कल्पनाप्रतिबन्धरूपमुत्तरोत्तरबाधकत्वम् । एवं च लिङ्गसमाख्याभ्यां भक्षमन्त्रांशस्य ग्रहणाङ्गत्वभक्षणाङ्गत्वयोः प्रसक्तौ लिङ्गेन समाख्याबाधनाद्ग्रहणाङ्गत्वं, संबन्धमात्रपरायाः समाख्यायास्तु ग्रहणादिद्वारा परंपरयाप्युपपत्तिः । क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते काण्डे समाम्नातस्य शुन्धध्वमिति मन्त्रादेः सन्निधानात् सान्नाय्याङ्गत्वम् ॥

तथा चैकस्मिन् रुद्ररूपे शेषिणि ईश्वरत्वरूपधर्मद्वयात्मकशेषद्वयबोधिकयोः कार्यत्वकर्मवश्यत्वादिप्रतिपादकवाक्यजातेश्वरसमाख्ययोर्विरोधाद्वाक्येन समाख्याबाधः । यथा परिक्रयादौ यजमानकर्तृकत्वबोधकेन " यजेत स्वर्गकामः" इति वाक्येनाध्वर्युकर्तृकत्वबोधिकाध्वर्यवसमाख्यायाः । यथा च गार्हपत्य एव ऐन्द्रीसंबन्धबोधकश्रुत्या आग्नेय्याङ्गत्वबोधक-

लिङ्गस्य । तथा हि—ईश्वरशब्दस्तावत् रुद्रे योगरूढः । तत्र च "[1] स्थेशभासपिसकसो वरच्" इति सूत्रोक्तवरच्प्रत्ययान्तेशधातुबोधितस्य ईशनशीलरूपयोगार्थस्य रूढ्युपस्थितरुद्रे तादात्म्येनान्वयादीशनशीलरुद्रबोधो जायते । तत्र योगार्थेशनशीले रूढ्यर्थरुद्रतादाम्यं, रूढ्यर्थरुद्रे योगार्थेशनशीलतादात्म्यं वा न विधातुं शक्यम् । तथा व्युत्पत्त्यभावात् । तथा च समाख्यायाः सिद्धवन्निर्देशान्यथानुपपत्त्या 'यो रुद्रः स ईशनशीलः' इत्यादिवाक्यकल्पना यावद्रुद्रे ईश्वरत्वं विधीयते, तावदेव क्लृप्तेन कार्यत्वादिबोधकवाक्येनानीश्वरत्वबोधकेन वाक्यकल्पनाप्रतिबन्धात् समाख्याबाधः । "हुत्वात्मानं देवदेवः" "तदा दर्शितपन्थानौ" इत्यादिवाक्यावगतभगवदायत्तापेक्षकेश्वरत्वपरतया च समाख्याप्युपपन्ना । अतो वाक्येन समाख्याबाधान्न रुद्रस्योत्कर्षसिद्धिः । किं च व्युत्क्रमेणोत्कर्षापकर्षगोचरविश्वरूपनारायणभिक्षुरुद्रादिसमाख्यान्तरैः प्रतिरोधान्न समाख्यया विवक्षितोत्कर्षापकर्षसिद्धिः ॥

किं च,

'नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥"

इत्यनेन भगवद्गतेश्वरादिसमाख्यानां रुद्रे सङ्केतकरणावगमान्न तया विवक्षितार्थसिद्धिः । यथा चायमर्थः तद्वचनस्य तथा पाराशर्यविजये महाचार्यैरुपपादितमनुसन्धेयम् । किं च खद्योतपुण्यजनादिसमाख्यानामल्पयोगार्थपरत्वविपर्ययपरत्वयोर्दर्शनेनात्रापि तथासन्देहान्न समाख्ययेष्टसिद्धिः । एवं तद्वाचकपदवाच्यत्वात्तद्वन्निकर्षादिसिद्धिरित्यत्र तद्वाचकेत्यादिहेतुशरीरे यदि योगार्थैक्यं विवक्षितं तदा हेतोः स्वरूपासिद्धिः । "पूर्वं वाहमिहासम् ?" इत्यादिश्रुत्या "यदि वा पूर्वमेवासमिहेति पुरुषं विदुः" "यदि वा बहुदानाद्वै विष्णुः पुरुष उच्यते" इति पाद्मोपबृंहितया भगवति पुरुषशब्दस्य योगार्थान्तरावगमात् । यदि च प्रवृत्तिनिमित्तैक्यं विवक्षितं तदा स्वात्मत्वेन जीववाचकपदवाच्यत्वदीश्वरस्यानिष्टप्रसङ्गः । यदि प्रवृत्तिनिमित्तभेदो विवक्षितः तथापि "स्थाणुः पुमान् महादेवे शङ्कावन्नी स्थिरे त्रिषु" इत्यभिधानकोशात् रुद्रस्य ऊर्ध्वताविशिष्टस्तम्भादिवदपकर्षप्रसङ्गः । भगवतश्च सर्वोत्कृष्टत्वप्रतिपादकप्रमाणगणैः कालात्ययापदेशो हेतोः ।

---

[1] पा. सू. ३-२-१७५.

तुल्यन्यायतयेन्द्रमहेन्द्रसमाख्याभ्याम् 'इदि परमैश्वर्ये' इति पठितधातुनिष्पन्नाभ्यामैश्वर्यपारम्यतन्महत्त्वप्रतिपादकाभ्यामिन्द्रस्य पारम्यसिद्धिः। श्रुत्यादिविरोधे समाख्यादौर्बल्यं तु रुद्रेऽपि समानम्। अवतारादिश्रुत्या च भगवति सकलश्रुतिसामरस्यमुपपादितम् इति ॥

* * * *

[अव॰] तमिमं सिद्धान्तमाह द्वाभ्याम्—

[मू॰] नैतत् साधु समाख्यया हि बलवद्वाक्यादिभग्नार्थया
नोत्कर्षो गिरिशस्य वक्तुमुचितः केनापि देवेन्द्रवत्।
इन्द्रः स्यात् परमेश्वरस्त्वितरथा तत्तत्समाख्यावशा-
दाख्या हि प्रबलप्रमाणविहता तस्मिन् महावृक्षवत् ॥ (94)

[व्या॰] एतत्—समाख्ययोत्कर्षापकर्षप्रतिपादनम्। न साधु—न सम्यक्। कुत इत्यत्राह—समाख्यया, हीत्यादि। हि—यस्मात्। बलवद्वाक्यादिभिः—बलसत्त्वरूपप्राबल्ययुक्तैर्वाक्यलिङ्गादिभिः (स्तदुपस्तम्भैः समाख्यान्तरैश्च) भग्नार्थया उच्छिन्नपूर्वप्रमाणानुमानया। समाख्यया—ईश्वरादिसमाख्यया। तत्तत्समाख्यावशात् देवेन्द्रवत्—इन्द्रमहेन्द्रसमाख्यया देवेन्द्रस्येव। गिरिशस्य—रुद्रस्य। उत्कर्षः—पारम्यम्। केनापि वक्तुं नोचितः। तस्मान्नैतत् साध्वित्यर्थः।

अर्थोऽनुमानम् "वाच्यवाचकसंबन्धस्तयोरर्थात् प्रतीयते" इत्यत्र तथा दर्शनात्। पारम्यरूपप्रयोजनं वा भग्नं यस्या इति भग्नार्थयेत्यस्यार्थः। गिरिशस्येत्युपमेये षष्ठीदर्शनात् देवेन्द्रवदिति षष्ठ्यन्ताद्वतिः। उपमानोपमेययोर्नैका समाख्यास्तीत्युपमाने तत्तत्समाख्यावशादित्याकृष्यते। महादेवशब्दवाच्यस्य देवतान्तरापेक्षयोत्कर्षेऽपि देवेन्द्रशब्दोक्तशचीपत्यपेक्षया निकर्षापत्तिरिति सूचनाय देवेन्द्रवदित्युक्तम्। ईश्वरत्वे हि पुरुषप्रतियोगिकत्वं कण्ठोक्तम्। इन्द्रत्वे तु देवप्रतियोगिकत्वं कण्ठोक्तम्। एवं सत्यपि श्रुत्यादिभिः-समाख्याबाधात् यदीन्द्रस्य निकर्षः तर्हि रुद्रस्य निकर्षः कैमुत्येनेत्यर्थः। (उत्तमेवपि-

ब्दयति इन्द्रः स्यादित्यादिना ) [ उक्तमेव विशदयति]—इन्द्रः स्यादित्यादिना। इतरथा समाख्यामात्रादुत्कर्षापकर्षसिद्धौ। तत्तत्समाख्यावशात्—इन्द्रमहेन्द्रदेवेन्द्र-रूपसमाख्याधीनतया। इन्द्रः परमेश्वरः स्यात्—सर्वोत्कृष्टः स्यात्। न चेदमिष्टं परस्येति भावः। परिहारसाम्याभिप्रायेण इन्द्रप्रतिबन्द्युक्तिः। तदाह—आख्येत्यादिना। तस्मिन्—रुद्रे। आख्या—ईश्वरादिसमाख्या। महावृक्षवत्—महावृक्षे महावृक्ष-समाख्येव। प्रबलप्रमाणविहता—प्रबलप्रमाणबाधितार्थेत्यर्थः। महावृक्षवदिति तन्त्रेण निर्देशः। सप्तमीप्रथमान्तप्रकृतिकवतिप्रत्ययान्तयोर्महावृक्षसदृशे तस्मिन् महावृक्षसदृशी समाख्येत्याद्यन्वयः। साक्षात् परंपरानादरेण प्रबलप्रमाणविहतत्वं दृष्टान्तदार्ष्टान्तिकयो-र्बोध्यम्। वस्तुवैलक्षण्ये प्रामाणिके तु सति सहपठनमकिञ्चित्करं तेजस्तिमिरवदिति फलपुष्पच्छायादिदौर्भाग्यविषयकप्रत्यक्षेण यथा महावृक्षे महावृक्षशब्दोक्तपूज्यत्वरूपमहत्त्व-बाधः तथानीश्वरत्वबोधकवाक्यादिरूपप्रबलप्रमाणबाधात् समाख्यया नोत्कर्षसिद्धि-रित्यर्थः॥ (94)

* * * *

[ अव० ] तद्वाचकपदवाच्यत्वरूपहेतुं कालात्ययापदेशविरुद्धत्वाभ्यां दूषयति॥

[ मू० ] किं जीवः पुरुषोक्तिगोचर इति श्रीशोऽपि तद्गोचरो
जीवः स्याद्गिरिशो ध्रुवो भवति किं तौ स्थाणुसंज्ञाविति।
तक्षत्वाय घटेत किं मुखभुवामाचार्यसंशब्दनं
मण्डूकत्वमुपैति किं हरिपदस्पर्शेन कण्ठीरवः॥ (95)

[ व्या० ] जीवः पुरुषोक्तिगोचर इति—जीवः पुरुषशब्दवाच्य इति हेतोः। तद्गोचरः—तद्वाच्यः श्रीशोऽपि जीवः स्यात् किम्। किंशब्दः क्षेपार्थकः। श्रीशो न जीवो भवेदित्यर्थः। "श्रियश्च श्रीर्भवेदग्र्या" इत्यादिभिः सर्वोत्कृष्टायाः श्रियोऽप्युत्कर्षो भगवत्यवगत इति, निकर्षव्यञ्जक-हेतुर्बाधित इति भावः। "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" "द्यावापृथिवी जनयन् देव एकः" "इयं हि प्रकृतिः सूक्ष्मा" "तत्र नारायणः श्रीमान् मया भिक्षां प्रयाचितः" इत्याद्यवगतं भगवतः परमकारणत्वं परमोदारत्वं च प्रत्यभिज्ञापयता श्रीपदेन समाख्यारूपेण, "यदि वा पूर्वमेवासमिहेति

पुरुषं विदुः " "यदि वा बहुदानाद्वै विष्णुः पुरुष उच्यते " इत्युक्तपुरुष-पदयोगार्थसारणात् पूर्वोक्तस्वरूपासिद्धिरपि सूचिता । तौ– स्तम्भरुद्रौ शंकुरुद्रौ वा । स्थाणुसंज्ञाविति—"स्थाणुः पुमान् महादेवे शङ्कावल्ली स्थिरे त्रिषु " इति कोशेन स्थाणुशब्दवाच्यतयावगताविति-हेतोः । गिरिशः—रुद्रः । ध्रुवो भवति किं , शङ्कुस्तम्भो वा न भवति किलेत्यर्थः । "ध्रुवः शङ्कौ वटे कीले योगे तारान्तरे पुमान् । तर्कनिश्चि-तयोः क्लीबे नित्यनिश्चलयोस्त्रिषु ॥" इति कोशोऽत्राभिप्रेतः । तथा च तद्वाचक-पदवाच्यत्वरूपहेतुः समीहितरुद्रोत्कर्षविपरीततन्निकर्षसाधकत्वाद्विरुद्ध इति भावः । मुखभुवाम्—ब्राह्मणानाम् । आचार्यसंशब्दनम्—आचार्यपदेन व्यवहारः । मुखभुवां तक्षत्वाय—ग्रामचण्डालमध्यपरिगणिततक्षकत्व-मानेतुम् । घटेत किम्—अर्हति किम् ? न घटत इत्यर्थः । तक्षत्वायेति 'क्रियार्थोपपद' इत्यादिना चतुर्थी । कण्ठीरवः—सिंहः, हरिपदवाच्यत्वरूप-हरिपद [ स्पर्शेन ] (संबन्धेन)। मण्डूकत्वम् उपैति किं नोपैती-त्यर्थः । करटिकरटविकटतटविपाटनपटुतरकटुरवतया प्रसिद्धस्य सिंहस्य, कूप-मण्डूक इति मेकानां ? प्रथमोदाहरणसिंहासनमूर्धाभिषिक्तमेकभावो न तद्वाचक-पदवाच्यत्वमात्रेणायातीत्यर्थः । अत्र " यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु " इति कोशोऽभिसंहितः ॥ (95)

*　*　*　*

[ अव० ] समाख्याभञ्जकवाक्यानां तदुपष्टम्भकवाक्यान्तरैरन्यपरत्वशङ्कायाः, अयोग्यार्थ-कत्वेन संप्रतिपन्नाकाशप्राणादिशब्दानामिव कार्यत्वकर्मवश्यत्वादिभिरयोग्यार्थ-कत्वेनावधृतशिवादिशब्दविशेषाणामपि गुणयोगवशेनापर्यवसानवृत्त्या वाऽन्यपर-नारायणानुवाकप्रतिपादिता (नन्यांतासिद्धा)वतारादियुक्तभगवत्परत्वं न्याय्यमिति न वाक्यान्तरैः समाख्योपष्टम्भ इति परिहारमभिप्रयन्नाह—[ प्राणेत्यादि ]

[ मू० ] प्राणाकाशमुखैः पदैरुपनिषद्भागेषु जोघुष्यते
किं न ब्रह्म परं परत्वगणना जागर्ति किं तावता ।
प्राणाद्येषु शिवादिशब्दगदितं तच्चेत्परत्वं कुत-
स्तत्तत्कारणवाक्यसिद्धभगवत्सृज्येषु रुद्रादिषु ॥ (97)

[ व्या० ] उपनिषद्भागेषु—छान्दोग्यादिप्रदेशविशेषेषु । परं ब्रह्म—त्रिविध-कारणत्वतदुपयुक्तगुणजातादिभिः सर्वप्रकारप्रकृष्टं, स्वरूपेण गुणैश्चानवधिकातिशयबृहत्त्वयुक्तं वस्तु । प्राणाकाशमुखैः पदैः—कार्यत्त्वादिना निर्ज्ञातपंचवृत्तिप्राणभूताकाशादिप्रसिद्धप्रणाकाशादिशब्दैः । न जोघुष्यते किम्—पुनः पुनः स्पष्टं न प्रतिपाद्यते किम् , प्रतिपाद्यत एवेत्यर्थः ॥

अत्र च योगवृत्तिरपर्यवसानवृत्तिर्वा विवक्षिता । मुखपदेनाव्याकृताजादिपदपरिग्रहः । पौनःपुन्यरूपेण क्रियासमभिहारेण 'प्राणादेव सर्वाणि' 'प्राणोऽसि' 'आकाशादेव' 'आकाशो ह वै' 'यदेष आकाशः' 'दहरोऽस्मिन्नन्तर आकाशः' इत्यादिप्राणादिपदावृत्तिरभिप्रेता । अनेन चाभ्यासरूपं तात्पर्यलिङ्गमप्युपपत्तिलक्षणतात्पर्यलिङ्गप्रत्यनीकानुपपत्त्यात्मकायोग्यार्थकत्वेन प्रतिहतं किलेति व्यज्यते । न किमित्यनेनायमर्थः संप्रतिपन्न इति व्यज्यते ॥

तावता वेदान्तेषु प्राणाकाशादिपदानां कारणप्रकरणेषु श्रवणमात्रेणार्थसामर्थ्यमप्यनपेक्ष्य, प्राणाद्येषु—कार्यत्त्वादिना प्रसिद्धपञ्चवृत्तिप्राणभूताकाशादिषु । परत्वगणना—पारम्यशङ्का । जागर्ति किम्—उन्मिषति किम् ? वस्तुसामर्थ्यव्यतिरेकनिश्चयेन परत्वशङ्काया एवानुन्मेष एव किलेत्यर्थः । तत् परं ब्रह्म । उपनिषद्भागेषु—श्वेताश्वतरादिषु । अनुषक्तस्योपनिषद्भागेष्वित्यस्य योग्यतया विशेषपरत्वम् । शिवादिशब्दगदितं चेत्—गुणयोगेनापर्यवसानवृत्त्या वा शिवरुद्रशम्भ्वादिशब्दैर्बोधितं यदि । कारणत्वस्य भगवद्धर्मताया बहूपनिषत्सिद्धत्वाच्छिवादिशब्दानां भगवति प्रयोगाद्गुणयोगस्य सृष्टिलयादिप्रकरणेष्वपेक्षितत्वाच्छिवादिशरीरकत्वबोधनस्य तथोपासनार्थमावश्यकत्वाच्च कारणप्रकरणस्थशिवादिशब्दानां भगवत्परत्वे न्याय्ये प्रसिद्धरुद्रादेरयोग्यतापि तत्सहकारिणीत्याह—तत्तत्कारणेत्यादिना । तत्तत्कारणवाक्यसिद्धं—अनन्यपरमहोपनिषन्नारायणोपनिषन्महानारायणोपनिषत्सुबालोपनिषत्पैङ्गिरहस्यादिबोधितं, भगवत्सृज्यत्वं येषां तथोक्तेषु । रुद्रादिषु, आदिशब्देन इन्द्रादिपरिग्रहः । दृष्टान्तार्थश्च तत्परिग्रहः । परत्वं—पारम्यम् । कुतः कस्मात् , न कस्मादपि हेतोः सिध्यतीत्यर्थः । अतो नेश्वरादिसमाख्यायास्तैरुपष्टम्भ इति भावः । महाप्रकरणस्य निगमनमप्ययं श्लोकः । भगवत्सृज्येति भावप्रधानो निर्देशः । तद् ब्रह्म शिवादिशब्दगदितं चेत् रुद्रादिषु परत्वं कुत इत्यन्वयः । परब्रह्मभूतभगवत एव

शिवादिशब्दवाच्यत्वात्, रुद्रादीनां च तत्सृज्यत्वाच्च रुद्रादेः पारम्यमित्यर्थः । एवं समाख्याया वाक्यान्तरैरुपष्टम्भासिद्धेः सा दुर्बलेति न तयेष्टसिद्धिरिति भावः ॥ (96)

* * * *

[ अ० ] वेदान्तवाक्यार्थनिर्णये हि भगवता बादरायणेनोपायद्वयं प्रवर्तितं ब्रह्मसूत्राणि उपबृंहणानि च । तत्र अधीतशाखार्थनिर्णायकानि ब्रह्मसूत्राणि, अनधीतशाखार्थनिर्णायकानि तूपबृंहणानि । तदाहुर्भट्टसुदर्शनपादाः—"अधीतशाखार्थस्य संशयविपर्ययादिनिरासको न्यायः; अनधीतशाखार्थैककण्ठ्येनाधीतशाखार्थज्ञापनार्थमुपबृंहणमित्यर्थः" इति । तत्र चैतावता श्लोकगणेन "वैधर्म्याच्च न स्वप्नादिवत्" "एतेन सर्वे व्याख्याताः" "कामादीतरत्र तत्र चायतनादिभ्यः" "तथान्य प्रतिषेधात्" इति सूत्रानुसारेण परिदृश्यमानवेदान्तवाक्यानामर्थनिर्णयः कृतः । इदानीमनधीतोपनिषत्सूक्तविपर्ययसंदेहनिराकरणाय तास्वप्ययमेवार्थः प्रतिपाद्यते, न त्वेतद्विरुद्ध इति ज्ञापनाय न्यायोपबृंहणयोरुपयोगभेदं दर्शयन्नुपबृंहणानां भगवत्पारम्यस्वारस्यमाह—[ यदित्यादि ]

[ मू० ] यदुपनिषद्भिरपृ [प्र] थि परिब्रढिमा परमः
कमलदृशो विशुद्धनयलब्धपरिष्कृतिभिः ।
इतरगिरोऽनुरोद्धुमिदमेव घटन्त इति
स्फुटमुपबृंहयन्ति मुनयोऽपि मनुप्रमुखाः ॥ (97)

[ व्या० ] विशुद्धनयैः—समन्वयाध्यायाद्युक्तैः प्रतितर्कपराहत्यभावादिना निर्दोषैर्न्यायैः, लब्धा—निष्पन्ना, परिष्कृतिः—अन्योन्यविरोधपरिहारेण सम्यगर्थावधारणसामर्थ्यरूपगुणाधानात्मिका यासां तास्तथोक्तास्ताभिः । परिष्कृतिर्भूषणं, तच्चेह उक्तरूपमेव । "[1] संपरिभ्यां करोतौ भूषणे" इति सुडागमः । उपनिषद्भिः—अत्राधीयमानाभिर्महोपनिषदादिभिः । परमः—सर्वोत्कृष्टत्वादुत्कृष्टान्तरशून्यः । कमलदृशः—पुण्डरीकाक्षस्य । परिब्रढिमा—परिवृढत्वं,

1. पा. अ ६-१-१३७

ब्रह्मत्वमित्यर्थः । अप्र[ प्र ] थि—प्रख्यापितः । प्रथ प्रख्याने । घटादित्वेन मित्वात् "चिण्णमुलोः" इति दीर्घविकल्पेन ह्रस्वः कर्मणि चिणि तलोपश्च ॥

अत्र परमः परिव्रढिमेत्यनेन "ब्रह्म परिवृढं सर्वतः" "तदेव ब्रह्म परमम्" इत्यादिवाक्यद्वयं सूचितम् । परिवृढशब्दात् भाव इमनिचि 'र ऋतो हलादेः' इति रभावः । कमलदृश इत्यनेन "ब्रह्मविदाप्नोति परम्" "ब्रह्म पुच्छम्" "ब्रह्मणो विद्वान्" इति ब्रह्मत्वेन प्रतिपादितस्य पुरुषान्तरावस्थितस्य आनन्दमयस्यादित्यमण्डलान्तर्वर्तित्वावगमात् तस्य च पुण्डरीकाक्षत्वावगमात् भगवत एव परब्रह्मत्वं न्याय्यमिति सूच्यते ।

इति यदिदमेव—समन्वयादिलक्षणोक्तन्यायानुगृहीताभिरधीयमानाभिरुपनिषद्भिर्भगवतो ब्रह्मत्वप्रख्यापनं, कर्म । इतरगिरः—अनधीतशाखाः, कुर्थ्यः । अनुरोद्धुं—अनुसर्तुम् । घटन्ते—अर्हन्ति । इति—इममर्थम् । मनुप्रमुखा मुनयोऽपि, स्फुटमुपबृंहयन्ति—उपबृंहणेन स्पष्टं उपपादयन्ति । अत्र चोपबृंहणं स्वयोगमहिमसाक्षात्कृतसकलवेदार्थप्रतिपादकग्रन्थप्रणयनम् ॥

मनुप्रमुखा इति प्रमुखशब्देन पराशरपाराशर्यप्राचेतसशुकशौनकादीनां संग्रहः । मन्वित्यनेन कपिलादीनां व्युदासः । तत्कृतोपबृंहणस्य श्रुत्यननुगुणत्वात् । अपिशब्देन पञ्चरात्रप्रणेतुर्भगवतः समुच्चयः । स्फुटमित्यनेन—

"त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात्
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः ॥

तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः ।
तपसा तोषयित्वा तं पितरं परमेश्वरम् ॥

ब्रह्मनारायणौ रुद्रः पुरा कल्पान्तरेऽसृजत् ।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ॥

विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत् पुनः ।
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥

एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।
परस्परस्माज्जायन्ते परस्परजयैषिणः ॥

तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥

क्वचिद्ब्रह्मा क्वचिद्रुद्रः क्वचिद्विष्णुः प्रशस्यते ।
नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥

तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।
तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥"

इत्यादीनामप्रचरवदवस्थानां नित्यवदाम्नानविरुद्धानां प्रक्षेपशङ्कास्पदानां व्युदासः ॥ (97)

*            *            *            *

[अ०] एवं समन्वयाविरोधलक्षणयोर्व्याख्येयांशा व्याख्याताः । अथ साधनलक्षणे "अध्ययनमात्रवतः" इति सूत्रविवक्षितमध्ययनविधेरक्षरराशिग्रहणपर्यवसितत्वमुच्यते । तत्र "स्वाध्यायोऽध्येतव्यः" इत्यस्याध्ययनगृहीतस्वाध्यायेनार्थज्ञानं भावयेदित्यर्थ इति भट्टाः । स्वाध्यायसाधनकेनाध्ययनेनार्थज्ञानं भावयेदित्यर्थ इति गुरवः । अर्थज्ञानफलकगुणकर्माध्ययननियमविधिपरत्वमस्येति केचित् । अर्थज्ञानफलतया अश्रवणं पक्षत्रयसाधारणो दोषः । अर्थज्ञानजनकतायाः प्रत्यक्षसिद्धत्वेन विधानासंभवः, "स्वाध्यायोऽध्येतव्यः" इति प्रतीयमानगुणकर्मत्वविरोधश्च प्रथमद्वितीयसाधारणः । अतो नोक्तार्थत्रयं संभवति । किंतु स्वाध्यायाध्ययनेन स्वाध्यायावाप्तिं भावयेदिति तस्यार्थः । समानपदोपात्तस्वाध्यायनिष्ठत्वात्, अध्ययनभावनां प्रत्यर्थज्ञानापेक्षया सन्निहितत्वात्, हुमादिव्यापकत्वात्तत्र फलतया क्लृप्तत्वाच्च स्वाध्यायावाप्तिरेव स्वमात्रोच्चारणानुकूलदृढतरसंस्कारप्रचयाधायकाक्षरावधारणात्मिका भाव्या । यथा तुषविमोकस्य दृष्टत्वाद्यागार्थपुरोडाशोपयोगाच्च व्रीहीणां पूर्वमनुपयुक्ततया प्रतिपत्तिकर्मणो भिन्नत्वादवहननस्य तत्संस्कृतव्रीहीणां वितुषाणां भाव्युपयोगाकाङ्क्षिणां पुरोडाशमुखेन क्रतूपयोग इष्यते; एवमर्थज्ञानस्य ब्रह्मयज्ञजपादेश्च दृष्टफलत्वाच्च पूर्वमनुपयुक्तस्वाध्यायाध्ययनस्य प्रतिपत्तिकर्मणो भिन्नत्वात् गृहीतस्य स्वाध्यायस्य

उत्तरोपयोगार्थकाङ्क्षिणोऽर्थज्ञानजपमुखेन दृष्टोपयोग इष्यते । अस्य च नियमविधित्वाल्लिखितपाठादिकं व्यावर्त्यते । एवं चानधीतस्वाध्यायजन्यार्थज्ञानादिकं न क्रतूपयोगीति सिध्यति । राद्धान्तेऽध्ययनविधिवाक्यार्थनिष्कर्षः ॥

अत्र केचिच्चोदयन्ति—अर्थज्ञानस्य विध्यस्पर्शे स्वाध्यायस्याविवक्षितार्थत्वप्रसङ्गः । अर्थावबोधमुद्दिश्य शब्दोच्चारणेन हि लोके वाक्यानां तात्पर्यमवगम्य तन्निर्वाहार्थं मुख्यासंभवे लक्षणादिकं परिकल्प्यते, न तूच्चारणमात्रेण । अत एवं 'गौरश्वः पुरुषो हस्ती' इति पदानामुच्चारणमात्रेण लक्षणा न कल्प्यते । यदा विशिष्टार्थबोधमुद्दिश्य तेषामुच्चारणमिति तात्पर्यमवगम्यते, तदैव तन्निर्वाहार्थमयं गौर्बलीवर्दः, अश्वो वेगवान्, पुरुषो नियतचेष्टः, हस्ती महाबल इति गवादिपदानां लक्षणादि कल्प्यते । एवं च वेदवाक्यानामर्थावबोधमुद्दिश्योच्चारणाभावे तात्पर्यासिद्ध्या तन्निर्वाहार्थं लक्षणादिकल्पनोच्छेदप्रसङ्गादवश्यं वेदेऽप्यर्थावबोधमुद्दिश्योच्चारणस्य वक्तव्यत्वात् वेदे च लोक इव तमुद्दिश्य रागप्रयुक्तोच्चारणाभावाद्विधिप्रयुक्तमेव तदाश्रयणीयमित्यध्ययनविधिस्पर्शोऽर्थज्ञानस्यावश्यकः । अतोऽध्ययनविधेर्नाक्षरावधारणार्थकत्वं युक्तमिति ॥

अत्रायं परिहारः—लोकव्युत्पत्तिसिद्धस्य शब्दानामर्थपरत्वस्यौत्सर्गिकस्य क्वचित्क्वचिल्लौकिकवाक्ये वक्तृदोषापवादेऽप्यपौरुषेये तदभावान्निरपवादस्य स्वत एव समर्थस्यार्थज्ञानोद्देश्यकशब्दोच्चारणस्य विधिनिरपेक्षत्वान्मौनिना लिखित्वा दत्ते परेणापि मौनिनानुसंहिते श्लोकादावर्थावबोधमुद्दिश्य शब्दोच्चारणस्य अदर्शनेन चाध्ययनविधेरर्थज्ञानस्पर्शानवकाशः । अन्यत्र विनियोगश्च न स्वाभाविकं शब्दस्यार्थपरत्वं विहन्ति, जपविधिवत् । "याजयित्वा प्रतिगृह्य वानश्नन् त्रिः स्वाध्यायं वेदमधीयीत त्रिरात्रं वा सावित्रीम्" "वेदमेव जपेन्नित्यम्" इत्यादिविधानं हि न वेदस्यार्थपरत्वं निवारयतीति । तदिदमाह—[ ऐदम्पर्यमित्यादि ]

[ मू० ] ऐदम्पर्यमपौरुषेयवचसामर्थेषु नैसर्गिकं
साक्षादक्षरसिद्धिपर्यवसितः स्वाध्यायविध्याशयः ।
व्याहन्तीति वदन्ति ये जपविधिन्यायेन संतुष्यता-
मायुष्मद्भिरनन्यलभ्यविषये शब्दः समुज्जृम्भते ॥ (98)

[ व्या० ] ये—अध्ययनविधेरसमीचीनार्थवादिनां पूर्वोपदर्शितास्त्रयः। अस्य च वदन्तीत्यनेनान्वयः। साक्षादक्षरसिद्धिपर्यवसितः—मुख्यायामासन्नायां प्रत्यक्षायां स्ववाक्योपात्तायां च, अक्षरसिद्धौ—स्वमात्रोच्चारणप्रयोजकस्मृतिविशेषहेतुसंस्कारातिरेकजनकाक्षरावधारणे, पर्यवसितः तदधिकस्पर्शविरहेण तत्रैवापवर्गी। स्वाध्यायविध्याशयः—"स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधायकवाक्याभिप्रायः। अध्ययनविधेरक्षरावधारणभाव्यकतातात्पर्यमित्यर्थः। नैसर्गिकं—स्वाभाविकम्। अपौरुषेयवचसां—वेदवाक्यानाम्। अर्थेषु—यागोपासनस्वर्गमोक्षादिरूपस्वाभिधेयेषु। ऐदम्पर्यं—इदंपरत्वं, तात्पर्यमिति यावत्। व्याहन्ति—निरुणद्धि। वेदानामर्थबोधकत्वग्रहं प्रतिबध्नातीति ये वदन्तीत्यन्वयः। अत्र यत्तदोर्नित्यसंबन्धात्तैरित्यध्याहारः। आयुष्मद्भिः—तैः जपविधिन्यायेन—वेदस्य जपे विनियोगेऽपि स्वतःप्राप्तार्थवत्त्वक्षत्यभावदर्शनेन। सन्तुष्यताम् अध्ययनविधिनाक्षरग्रहणे विनियोगेऽपि न स्वतः प्राप्तार्थवत्त्वक्षतिरित्याश्वासः प्राप्तव्य इत्यर्थः। शब्दः—शास्त्ररूपः। अनन्यलभ्यविषये—मानान्तराप्राप्तार्थे। समुज्जृम्भते—निरङ्कुशं व्याप्रियते॥

अन्यत्र विनियोगो न नैसर्गिकमर्थपरत्वं विहन्तीति बोधनाय समित्युक्तम्। अत्रापौरुषेयपदेनापवादवक्तृदोषविरहोऽभिप्रेतः। नैसर्गिकपदेन विधिनिरपेक्षत्वं सूच्यते। एवं परिहारद्वयं सूचितम्। जपविधिन्यायश्च तृतीयपरिहारः। साक्षात्पदेन च साक्षात्प्रत्यक्षमुख्ययोरिति तन्त्रेणार्थद्वयं विवक्षितम्। अनेन चानासन्नानुपात्तार्थज्ञानव्युदासः। पर्यवसितशब्देनाक्षरग्रहणस्यासन्नत्वात् स्ववाक्योपात्तत्वाच्च लाघवेन भाव्यत्वं, न तु व्यवहितस्याशाब्दस्याप्यर्थज्ञानस्य भाव्यत्वं गौरवापत्तेरिति सूचितम्॥ (98)

* * * *

[ अ० ] अर्थज्ञानस्य विध्यस्पर्शे स्वाध्यायस्याविवक्षितार्थत्वप्रसङ्ग इति वदन् वादी विकल्प्यते—"स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिरर्थपरः, उत न। आद्येऽर्थावबोधमुद्दिश्याध्ययनविधिं विनैव यथा "स्वाध्यायोऽध्येतव्यः" इति वाक्यस्य स्वतःप्राप्तमर्थवत्त्वं, तथैव वाक्यान्तराणामपि तं विनैव स्वतःप्राप्तमर्थ-

वत्त्वमनिवार्यम् । द्वितीये तु अर्थावबोधमुद्दिश्याध्ययनकर्तव्यताया इवाक्षरावधारणमुद्दिश्याध्ययनकर्तव्यताया अप्यसिद्धया निष्प्रतिभटं वेदानामर्थवत्त्वमिति । तदिदमाह—[ य इत्यादि ]—

[ मू० ] यः स्वार्थेष्वनिदंपराः श्रुतिगिरः स्वाध्यायविध्याशया-
दाचष्टे स विकल्पमर्हति विधिः सार्थः किमास्थीयते ।
यद्वानर्थक इत्यनेन वचसा तुल्यत्वमासां गिरा-
माद्ये स्यादितरत्र तत्प्रतिभटः किं स्यादकस्माद्विधिः ॥ (99)

[ व्या० ] यः स्वाध्यायविध्याशयात् — अक्षरावधारणमात्रकाध्ययनसंस्कारभावनातात्पर्यकत्वमध्ययनविधेरसदुक्तमनूद्य । श्रुतिगिरः— वेदवाक्यानि । स्वार्थेष्वनिदंपराः—स्वतःप्राप्तेष्वभिधेयेषु तात्पर्यशून्या भवेयुरिति । आचष्टे— ब्रवीति । अध्ययनविधेरक्षरग्रहणपर्यवसितत्वे वेदस्याविवक्षितार्थत्वप्रसङ्ग इति यो वदतीत्यर्थः । आशयादिति ल्यब्लोपे पञ्चमी । सः–वादी । विधिः—अध्ययनविधिः । सार्थः—साभिधेयत्वेन । आस्थीयते किं—त्वया स्वीक्रियते किम् ? यद्वा अनर्थकः—अनभिधेयकतया आस्थीयत इति विकल्पं—दूषयिष्यमाणकोटिद्वयाभ्युपगमप्रश्नम् । अर्हति—क्षमते, स एवं प्रष्टव्य इत्यर्थः । तत्राद्यकोटिं दूषयति—अनेनेत्यादिना । आद्ये—स्वाध्यायाध्ययनविधेः सार्थकत्वशिरसि । आसां गिरां—अध्ययनविधिवाक्यव्यतिरिक्तवेदवाक्यानाम् । अनेन वचसा तुल्यत्वं—अर्थावबोधमुद्दिश्याध्ययनविध्यभावेऽपि स्वतःप्राप्तेनार्थवत्त्वेनार्थबोधकेन 'स्वाध्यायोऽध्येतव्यः' इति वाक्येन विध्यभावेऽप्यर्थबोधकत्वं धर्मतस्तौल्यम् । अत्र भवतीति शेषः । [1] "तुल्यार्थैः" इत्यादिना वचसेति तृतीया । द्वितीयं दूषयति—इतरत्रेत्यादिना । इतरत्र स्वध्यायाध्ययनविधेरर्थशून्यत्वे । विधिः—अध्ययनविधिः । अकस्मात्—निष्कारणम् । तत्प्रतिभटः स्यात् किं—वेदस्यार्थपरत्वप्रतिक्षेपको भवेत् किम् ? न भवेदित्यर्थः । अध्ययनविधेरर्थशून्यत्वे हि अक्षरावधारणोद्देशेनाध्ययनकर्तव्यत्वासिद्धया वेदानामर्थपरत्वं निष्प्रत्यनीकमिति भावः ॥

1 पा. अ. २-३-७२

इदमेवाभिप्रेत्य महाचार्यचरणैरनुगृहीतम्—"न चार्थज्ञानस्य विध्यस्पर्शे स्वाध्यायस्याविवक्षितार्थत्वप्रसङ्गः स्वाध्यायाध्ययनविधिवदेव उपपत्तेः" इति। नन्वध्ययनविधिवाक्यस्याक्षरग्रहणोद्देशेनाध्ययनविधायकवाक्यान्तराभावेन स्वतःप्राप्तमर्थवत्त्वमनपोदितम्। तेन तु वाक्यान्तराणामक्षरग्रहणोद्देशेनाध्ययनविधानादर्थपरत्वमपोद्येतेति चेन्न; जपविधिन्यायस्योक्तत्वात्। तदुक्तं मेघनादारिसूरिचरणैः—"अतो जपविधेरपि स्वार्थप्रतीतिसिद्ध्यर्थं स्वाध्ययनस्यार्थपरतापेक्षितैव। न च जपार्थपरत्वयोर्वस्तुविरोधो निरर्थकोच्चारणरूपत्वाज्जपस्येति वाच्यम्, अनुष्ठानकाले विवक्षाभावमात्रादपि तदुपपत्तेः" इति॥ (99)

* * * *

[अव०] अध्ययनस्य संस्कारकर्मत्वं, तद्विधेर्नियमपरत्वं, अध्यापनस्याचार्यरागतः प्राप्तत्वं, [स्वविधि] प्रयुक्तत्वं, उपनयनस्य माणवकद्वाराध्ययनशेषत्वं, अध्ययनविधेरक्षरग्रहणपर्यवसितत्वेऽपि वेदस्य स्वतःप्राप्तत्वादर्थवत्ताया रागत एव विचारप्रवृत्तिः, समावृत्तस्यापि रागतः श्रवणं, गृहस्थधर्माणां च हितैषिवचनादनुष्ठानं, तस्मिन् प्रमाणमूलकत्वनिश्चयार्थं प्रष्टृणां स्वयमुपदेशार्थं च श्रवणमिति सिद्धान्तपरिपाटी॥

अत्राहुः—"रागतोऽपि समावृत्तस्य श्रवणं नोपपद्यते। गृहस्थकर्मानुष्ठानानवरुद्धश्रवणावसरालाभात् गुर्वर्थमुदकाहरणकाष्ठसंपादनादिभिरनुष्ठानोपरोधाच्चेति। अत्रायं परिहारः—गुरोः स्वधर्मानुष्ठानानुपरोधेन 'प्रतिग्रहादिना धनमार्जयेत्' इति शास्त्रानुमतरागप्राप्तश्रवणावसरलाभवच्छ्रोतुरपि स्वानुष्ठानोपयोगिरागप्राप्तश्रवणावसरप्रद एवानुष्ठानविधिरिति श्रवणावसरः सुलभः। अध्ययनविधिप्रयुक्तस्योदकाहरणादेस्तन्निवृत्त्या निवृत्तत्वान्नानुष्ठानोपरोधश्च। उदकाहरणाद्यभावेऽपि वित्तख्यात्यादिप्रयोजनान्तरस्पृहया शिष्यस्नेहेन च गुरोः श्रावयितृत्वमुपपद्यते" इति। तदिदमाह द्वाभ्यां श्लोकाभ्याम्। तत्र चोद्यमनुवदन् परिहारं प्रतिजानीते प्रथमेन—[यदित्यादि]

[मू०] यच्छ्रोतुर्गृहमेधिनो गुरुगृहे काष्ठोदकाद्याहृति-
व्यासक्तस्य न संभवत्यवसरस्तत्तत्स्वकर्मक्रमे।
स्याच्चेद्गुर्वनुवर्तनाद्यनुगुणः क्लृप्तावकाशो भवे-
दित्युक्तं कतिभिश्चिदत्र कुशलैरित्थं समाधीयते॥ (100)

[व्या०] कतिभिश्चित्—पूर्वोपदर्शितैस्त्रिभिर्वादिभिः । इदं चोक्तमित्यत्रान्वेति । गुरुगृहे काष्ठोदकाद्याहृतिन्यासक्तस्य—गुरुगृहे गुर्वर्थमुदकाहरणेन्धनसंपादनादिभिरन्यपरस्य । गृहमेधिनः—गृहस्थस्य । 'मधुमेधासंगमनयोः' ['मेधृसङ्गमे च'] इति धातुपाठः । गृहैर्दारैःसंगच्छत इति गृहमेधी तस्य । कृतोद्वाहस्येत्यर्थः । श्रोतुः–श्रवणाधिकारिणः । तेषां तेषां स्वीयानां कर्मणाम् अग्निहोत्रपञ्चमहायज्ञादीनां, क्रमे आनुपूर्व्येणाविच्छेदेनानुष्ठाने । अवसरः—कालः । अनुष्ठानकाल इत्यर्थः । न संभवति । स्याच्चेत् स्वधर्मानुष्ठानं संभवति चेत् । गुर्वनुवर्तनादेः काष्ठोदकाद्याहरणप्रणिपातादेः, अनुगुणः अनुकूलः अवकाशः, कुत्र भवेत् कथं भवेत्, न भवेदित्यर्थ : । तथा च गृहस्थस्य स्वधर्मानुष्ठानोपरोधप्रसङ्गात्तदभावे गुरुशुश्रूषोपरोधप्रसङ्गाच्च न विचारप्रवृत्त्युपपत्तिरिति चोद्यग्रन्थार्थः । इति यदुक्तम् । अत्र--अस्मिन् चोद्ये । कुशलैः—सूत्रकारहृदयानुसारिभिर्भगवद्भाष्यकारादिभिर्वेदार्थनिर्वहणनिपुणैरस्मदाचार्यैः । इत्थं—वक्ष्यमाणदिशा । समाधीयते—परिहारः क्रियते । समादधातेरविवक्षितकर्मत्वाद्भावे लकारः ॥ (100)

* * * *

[अव०] इत्थमिति [अभिप्रेतं] (पराभिप्रेतं) समाधानप्रकारमाह—[यद्वेदेत्यादि]

[मू०] यद्वेदाक्षरराशिसिद्ध्युपरतः स्वाध्यायविध्याशय-
स्तत्तन्मूलकशिष्यकृत्यविरतेर्लब्धावकाशाः क्रियाः ।
श्रोतुः श्रावयितुर्यथेत्यवसरः श्रोतुश्च सिध्येत्तथा
स्नेहेन स्पृहया च वित्तयशसोः शिष्यं गुरुः श्रावयेत् ॥ (101)

[व्या०] यत्—यस्माद्धेतोः । स्वाध्यायविध्याशयः—अध्ययनविधिवाक्यतात्पर्यम् । वेदः चासौ अक्षरराशिश्चेति विग्रहे कर्मधारयः, तस्य सिद्धौ अवधारणे, उपरतः—अर्थज्ञानास्पर्शेन तत्रैव पर्यवसितः । अत्र भवतीति शेषः । उपरत इत्यनेन व्याख्यात्रुपपादनेन विनापि स्वयमेव तथा पर्यवसित इति सूचनादर्थान्तराभिधानं श्रुतिपीडनमेवेति लभ्यते । तदुक्तं महाचार्यचरणैः—"स्वतात्पर्यमावेदयन्तीं श्रुतिमनादृत्याभीष्टस्वर्थबोधनाय श्रुतिपीडने तच्छ्रुतिद्रोहा-

दनर्थपरम्परातश्च न कदाचिदपि मुक्तिः" इति । तत्—तस्माद्धेतोः । इदं च विरतावन्वेति । श्रोतुः—श्रवणाधिकारिणः गृहमेधिन इत्यनुषज्यते । क्रियाः—पञ्च महायज्ञादयः । तन्मूलकानां अध्ययननिमित्तकानां, शिष्यकृत्यानां—उदकाहरणाद्यवश्यकर्तव्यानां कर्मणां, विरतेः—निमित्तभूताध्ययननिवृत्तिप्रयुक्तनिवृत्तेर्हेतोः । लब्धावकाशाः—संभवदनुष्ठानकाला इति हेतोः । इतिपदमत्राकृष्यते । स च हेत्वर्थः । इदं च दार्ष्टान्तिकेऽन्वेति । यथा श्रावयितुः अवसरः सिध्येत् तथा श्रोतुः क्रिया अध्ययननिवृत्तिप्रयुक्तोदकाहरणादिशिष्यकृत्यनिवृत्त्या लब्धावकाशा इति हेतोः । श्रोतुरप्यवसरः, सिध्येत्—सिध्यई इत्यर्थः ॥

अध्ययनविधिप्रयुक्तानामुदकाहरणादीनां अध्ययनाय नियमेनोपादेयत्वाभिप्रायेण मूलपदनिर्देशः । भवति हि फलस्यापि सङ्कल्पद्वारा स्वोपायहेतुत्वम् । अत्र श्रावयितुर्यथेत्यादिना स्वधर्मानुष्ठानानवरुद्धश्रवणकालः, तन्मूलकेत्यादिना गुर्वनुवर्तनेन तदनुपरोधश्चोक्तौ । अत्र चैकं श्रोतुरिति पदं क्रिया इत्यनेनान्वेति । द्वितीयं त्ववसर इत्यनेनेति न पुनरुक्तिः । अत्र चाध्ययनविधेरक्षरराशिग्रहणपर्यवसितत्व एव गृहस्थस्य श्रवणावसरः संभवति, न त्वर्थज्ञानपर्यन्तत्वे, उदकाहरणादेर्यावदध्ययनविधिसिद्धार्थानुष्ठानसमाप्त्यनुवृत्तेर्गृहस्थस्य पञ्चमहायज्ञादिस्वधर्मानुष्ठानोपरोधगुर्वनुवर्तनोपरोधयोरन्यतरस्यावर्जनीयत्वात् । न चेष्टापत्तिः । युधिष्ठिरादीनां गार्हस्थ्यनिष्ठानामपि भीष्मादिभ्यः श्रवणस्य भारतादिषु प्रतिपादितत्वात् । अतस्त्वदुक्तदोषस्तदैव भवतीति वेदाक्षरराशिसिद्ध्युपरत इत्यनेन ध्वन्यते ॥

नन्वनुवर्तनाभावे गुरुः कथं श्रावयेदित्यत्राह—स्नेहेनेत्यादि । गुरुः, स्नेहेन—शिष्यप्रीत्या । [वित्तयशसोः स्पृहया] । शिष्यदत्तधनेच्छया, तदभावे विद्यादानप्रयुक्तपरमोदारत्वप्रथाकामनया वा । एतेन अध्यापनस्य वैधत्वं निरस्तम् । शिष्यं श्रावयेत्— । अत्र वेदार्थमिति शेषः ।

अत्र स्नेहेन श्वेतकेतुविषये, वित्तेच्छया जानश्रुतिविषये, यशस्कामनया मैत्रेयविषये चारुणिरैक्वपराशराणां श्रावणं श्रुत्युपबृंहणसिद्धं द्रष्टव्यम् । यद्यपि पराशरस्य स्नेहेन मैत्रेयं प्रति श्रावणम्; तथापि "मामन्येनाकृतश्रमं कथयिष्यन्ति" इत्यनेन यशसोऽपि

हेतुत्वं ध्वन्यते ।. अत्र च वितरणमूलकप्रथाया यशस्त्वप्रसिद्धेर्विद्यावितरणं यशोहेतुरिति वित्तयशसोरित्युक्तम् । "कुमार्थ इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च" इत्यत्रेव शेषत्वविवक्षया वित्तयशसोरिति षष्ठी । प्रकर्षविवक्षायां परत्वात् कर्मसंज्ञया कृद्योगलक्षणा वा षष्ठी । "समं ब्राह्मणे दानम्" इतिवत् संप्रदानस्याधिकरणत्वविवक्षया सप्तमी वा । "सत्कारकीर्तिधनरुग्विघ्नेषु निर्व्यपेक्षः प्रश्नोचितेषु परया कृपया प्रसीद" इत्यादिकमप्यत्रानुसन्धेयम् ॥ (101)

* * * *

[अ०] एवं समन्वयाविरोधसाधनलक्षणेषु व्याख्येयांशाः प्रायशो व्याख्याताः । इदानीं फललक्षणेऽर्चिरादिपादं व्याचष्टे—[अर्चिरित्यादि]

[मू०] अर्चिरहस्सितपक्षानुदगयनाब्दमरुदर्केन्दून् ।
अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः ॥ (102)

[व्या०] अर्चिः—अर्चिरभिमानिदेवता । अहः—दिनाभिमानिदेवता । सितपक्षः शुक्लपक्षाभिमानिदेवता । अर्चिश्चेत्यादिविग्रहे इतरेतरयोगद्वन्द्वः । तान् । उदगयन—उत्तरायणाभिमानिदेवता । अब्दः—संवत्सराभिमानिदेवता । मरुत्—वायुदेवता । अर्कः—आदित्यः । इन्दुः—चन्द्रमाः । तान् । अत्रापीतरेतरयोगद्वन्द्वः । वैद्युतः—विद्युदभिमानिदेवता । वरुणः प्रसिद्धः, इन्द्रः प्रसिद्धः, प्रजापतिः—धाता, तान् । अत्रापि पूर्ववत् द्वन्द्वः । उक्तान् द्वादश । विदुषः—मुक्तस्य । आतिवाहिकान्—अतिवहने प्रापणे परमपुरुषेण नियुक्तान् । आहुः—वदन्ति । सूत्रकारा इति शेषः ॥

अत्र अर्चिरित्यारभ्य प्रजापतीन् इत्यन्तेन क्रमस्य क्रमिणां च विवक्षितत्वात्, "अर्चिरादिना तत्प्रथितेः" "वायुमब्दादविशेषविशेषाभ्याम्" "तटितोऽधि वरुणः संबन्धात्" इति सूत्रैः पूर्वतन्त्रोक्तश्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डक्रमेषु श्रुत्यर्थपाठरूपाणां संभवतां क्रमाणां छान्दोग्यकौषीतकीबृहदारण्यकादिवाक्योक्तेष्वर्चिःप्रभृतिषु पदार्थेषु निर्णीततया प्रत्यभिज्ञानेन मार्गैक्यस्यापि साधितत्वात् । वायुदेवलोकशब्दयोश्च छागपशुन्यायेन एकार्थवृत्तित्वनिर्णयेन ज्योतिर्मयकृत्स्नवैमानिकदेवतागणस्य वायुपाशधृत-

त्वाद्वायोरेव देवलोकशब्दार्थतया वायुलोकशब्दस्य च वायुश्चासौ लोक इति कर्मधारयज्यायस्त्वेन देवावासभूतवायुविषयत्वात्, अर्चिरादिरेक एव दर्शितक्रमविशिष्टो मार्ग इत्ययमर्थोऽभिसंहितः । आतिवाहिकानित्यनेन च नेमे मार्गचि[ह्न] (न्वा) भूता न वा भोगभूमयः, किं तु परमपुरुषेण मुक्तानामतिवाहे नियुक्ता देवताविशेषा इति "आतिवाहिकास्तल्लिङ्गात्" इत्यधिकरणनिर्णीतार्थोऽभिप्रेतः । अत्र च वैद्युतस्यामानवस्यैव गमयितृत्वं, वरुणादीनां त्वनुग्राहकतयातिवहनान्वय इत्ययमर्थोऽप्यनुसन्धेयः । इदं च "वैद्युतेनैव ततस्तच्छ्रुतेः" इति सूत्रेण निर्णीतम् । आतिवाहिकशब्दश्च "तत्र नियुक्त" इति सूत्रविहितनियुक्तार्थकठक्प्रत्ययान्तः । अस्मिन् श्लोके उद्गीतिर्नामार्याभेदः—

"आर्याशकलद्वितयं व्यत्ययरचितं भवेदस्याः ।
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥" इति । (102)

*   *   *   *

[अव॰] परिपूर्णफलनिरूपणपरं शारीरकान्तिमलक्षणान्तिमपादान्तिमाधिकरणम् (व्याचिख्यासुः व्याख्येयं निर्दिशति-अन्तिमाधिकरण इति । अस्य व्याख्येयं व्याख्यायत इति शेषः ।) जगद्व्यापाराधिकरणमन्तिमाधिकरणम् । 'अनावृत्तिश्शब्दादित्यस्याधिकरणान्तरत्वे तदेवान्तिमाधिकरणम् । तत्र हि तदर्थविचारपरंपरायां मुक्तानामस्वातन्त्र्यस्यानन्दवैकल्यापादकत्वानापादकत्वयोः क्रमेण पूर्वोत्तरपक्षयोर्निविष्टतया राद्धान्तनिविष्टमस्वातन्त्र्यस्यानन्दवैकल्यानापादकत्वं सहेतुकमुपपाद्यत इत्यर्थः । अस्वतन्त्रस्यावृत्तिसंभवासंभवयोरपि क्रमेण तन्निविष्टतया तत्रास्वातन्त्र्यमपि निविष्टमिति तस्य किमस्वातन्त्र्यरूपत्वाद्दुःखावहत्वमुतात्माभिमानानुगुणत्वादित्यस्यापि निविष्टत्वेनानावृत्तिसूत्रस्याधिकरणान्तरत्वेऽपि राद्धान्ताभिमतमस्वातन्त्र्यस्यानन्दवैकल्यानापादकत्वमुपपाद्यत इत्यर्थः ?—[शेषत्वमित्यादि]

[मू॰] शेषत्वं ननु दुःखमीक्षितमतो मुक्तेषु युक्तं न त-
न्नैवं माधवदास्यमौपनिषदं जागर्ति भूयः प्रियम् ।
धर्मिग्राहकमानधिकृतमतस्तद्दुःखतासाधनं
यद्वा तद्व्यतिरिक्तदास्यमसुखं साध्येत सिद्धं हि तत् ॥ (103)

[व्या०] नन्विति शङ्कायाम् । शेषत्वं—अस्वातन्त्र्यम् । "यस्य परातिशय एव परमप्रयोजनं स शेषः परश्शेषी" इति भट्टसुदर्शनपादानुगृहीतनिष्कर्ष-रीत्या मालयापि स्वप्रयोजनविरहितपरप्रयोजनहेतुत्वरूपं शेषत्वमित्यर्थः । दुःखमीक्षितं—चेतयमानस्य प्रतिकूलमिति लोकदृष्टम् । तत्—शेषत्वम् । अतः—दुःखरूपत्वाद्धेतोः । मुक्तेषु—सर्वदुःखविनिर्मुक्तेषु मुक्तात्मसु । न युक्तं—अनुपपन्नम् । ननु अनुपपन्नमिति शङ्क्यत इत्यर्थः ॥

शेषत्वं दुःखरूपं शेषतात्वात् संप्रतिपन्नवदित्यनुमानमिहाभिप्रेतम् । "सर्वं परवशं दुःखम्" "सेवा श्ववृत्ति(र्व्या)[रा]ख्याता तस्मात्तां परिवर्जयेत्" इति स्मृतिश्च विवक्षिता । अत्र च प्रियविषयशेषत्वस्य सुखरूपत्वदर्शनाद्धेतोरनैकान्त्यम् । शेषत्वे दुःखरूपतायाः कर्ममूलकदेहात्माभिमानप्रयुक्तत्वात् । सोपाधिकत्वं च भोग्यगुणव-दन्यनिरूपितशेषत्वस्य दुःखरूपत्वनियतत्वेऽपि उभयलिङ्गकभगवच्छेषत्वे तदप्रवृत्तिः । भगवच्छेषत्वे सुखरूपत्वं शास्त्रसिद्धमिति कालात्ययापदेशश्च । अन्यशेषत्वस्य दुःख-रूपत्वसाधने सिद्धसाधनम् । शेषत्वसामान्यस्य दुःखरूपत्वसाधनेऽप्यंशतो बाधितत्वम् । अंशतश्च सिद्धसाधनत्वम् । सर्वं परवशमित्यादिसामान्यवचनस्य भगवद्दास्यसुखत्वबोधक-वचनशतैः पदाहवनीयन्यायेन संकोचः प्रामाणिकः । प्रियविषयशेषत्वांशे प्रत्यक्ष-विरोधाच्चावश्यकः सङ्कोचः । मातापितृशेषत्वं सुखरूपं दृष्टमिति "सर्वेषामेव लोकानां पिता माता च माधवः" इत्युक्तभगवच्छेषत्वं सुखरूपमिति युक्तम् । शास्त्रविहितं च मातापितृशेषत्वम् अतो नानुपपत्तिः ॥

"आत्माभिमानानुगुणा पुरुषार्थव्यवस्थितिः ।
यतस्ततो न शेषत्वे सुसाधा दुःखरूपता ॥"

तृणादेर्हि गवादिभोग्यत्वे तृणत्वादिकं न नियामकम् । व्याघ्रादीन् प्रत्यपि तदापत्तेः । नापि तृणादिभोग्यताबुद्धौ स्वाश्रयावच्छिन्नत्वघटितसामानाधिकरण्येन गोत्वादिकं कारणमिति वक्तुं युक्तम् । गवादेर्गोत्वाप्रतिसन्धानदशायामपि तृणादेर्भोग्यत्वापत्तेः । प्रसिद्धं हि भरतजनकादीनां मनुष्यत्ववतामपि तदभिमानविरहमात्रेण मनुष्यत्वनियत-सुखाद्यनन्वयः । दृष्टश्च जन्मान्तरे ब्राह्मणस्य जातिस्मरस्य शुकविशेषस्य चण्डालगृहे जलपानाद्यभाववादः । अतस्तत्तदात्माभिमानानुरूपैव पुरुषार्थव्यवस्था—

तदुक्तम् "अन्नं भोज्यं मनुष्याणाममृतं तु दिवौकसाम् ।
श्वपशू विट्तृणाहारौ सन्तो दास्यैकजीवनाः ॥" इति ।

अत्र च "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इत्युक्तरीत्या प्राप्तशेषिनिरूपितस्वनिष्ठशेषत्वाध्यवसायवन्तः सन्तः । अत एव मनुष्याणामित्यादौ मनुष्यत्वाद्यभिमा(नि)नवतामिति लब्धम् । इदं च वेदार्थसङ्ग्रहतद्दीपिकयोर्व्यक्तमुपपादितम् । श्रुतप्रकाशिकायां च—"सर्वेषां हि स्वात्माभिमानानुगुणा भोग्यव्यवस्था तद्विपर्ययव्यवस्था च । तथा पुरुषपश्वादिषु दृश्यते । तस्मादात्मन अविर्भूतयथावस्थितस्वरूपस्य शेषत्वमेव स्वाभाविकं रूपमपरोक्षयतः स्वशेषिपरमपुरुषपरिचरणमेव प्रियतमं स्यात् । तद्विपर्ययेणेशितृत्वमत्यन्तानिष्टमेव" इत्युक्तम् । न च स्वभोगस्य मात्रयाप्यनुद्देश्यत्वे सर्वदा स्वेन भगवतो यत्किंचित्प्रयोजनसिद्धेर्न मुमुक्षा स्यादिति वाच्यम् ; लीलारसादितः कैङ्कर्याधीनभगवदानन्दस्यातिशयितत्वात् । न चैवमपि येन केनचिदानन्दसिद्धेर्न नियमतः स्वमोक्षेच्छा स्यादिति वाच्यम् ; स्वोपादानपरमप्रयोजनं भगवतः सिध्येदित्येवंरूपेच्छाया अविरोधात् । सर्वो हि चेतनः स्वार्थमेव प्रवर्तेत इति पुनः प्रकृष्टकृपास्नेहान्वितेषु व्यभिचारीति श्रुतप्रकाशिकायां स्फुटम् ॥

तदिदं सर्वमभिसंधायाह—मैवं माधवदास्यमिति । मैवं—पूर्वोक्तदूषणं नेत्यर्थः । कुत इत्यत्राह—माधवदास्यमित्यादि । माधवदास्यं—श्रियःपतिपरिचरणम् । दासशब्दात् कर्मणि ष्यञ्प्रत्ययः । औपनिषदं सत्—उपनिषत्प्रतिपाद्यं सत् । भूयः प्रियं—निरतिशयप्रियम् । जागर्ति—प्रत्यक्षदृष्टमपि भवति । अतः—पूर्वोक्ताद्धेतोः । तस्य—परमपुरुषपरिचरणस्य, दुःखतासाधनम्—दुःखरूपतानुमानम् । धर्मिग्राहकमानाभ्यां—दुःखरूपतारूपसाध्यधर्मं प्रति पक्षतया धर्मिभूतपरिचरणस्वरूपग्राहकाभ्यां शास्त्रप्रत्यक्षाभ्यां, धिक्कृतं—बाधितविषयम् । अत्र भवतीति शेषः । यद्वेति—पक्षान्तरे । तद्व्यतिरिक्तदास्यं—परमपुरुषपरिचरणादन्यदनाप्तपरिचरणम् । असुखं साध्येत—दुःखरूपमनुमीयते चेत् । तत्—परमपुरुषपरिचरणादन्यस्य दुःखरूपत्वम् । सिद्धमेव हि—प्रमाणान्तरप्रमितमेव खल्वित्यर्थः ॥

अत्र कालात्ययापदेशः सिद्धसाधनत्वं च कण्ठोक्तम् । उपाध्यनुक्ते ? स्वाभाविकत्वावगमकोपनिषन्निर्देशाच्च दुःखरूपत्वप्रयोजकौपाधिकत्वरूपोपाधिनिवृत्तिः पक्षे दर्शिता । माधवेति सर्वप्रकारमङ्गलरूपत्वावगमात् भोग्यगुणवदन्यनिरूपितत्वनिवृत्तिश्च दर्शिता ।

जागर्तीत्यनेन साकेतनगरवास्तव्ययायजूकजनगुहमारुतिसुग्रीवविभीषणविदुराक्रूरमालाकारप्रभृतीनां भगवद्दास्यं सुखरूपं दृष्टमिति हेतोरनैकान्त्यम् । तेषां हि—"एभिश्छायां विधास्यामःस्वैश्छत्रैर्वाजपेयिकैः" इत्यादिभिर्भगवद्दास्यं सुखरूपमवगतम् । भूयश्शब्देन च निरतिशयत्ववाचिना स्वल्पप्रियकामिनीपरिचरणादेर्व्यावर्त्यत्वप्रतीतेस्तत्राप्यनैकान्त्यं सूचितम् । माधवदास्यमौपनिषदमिति भगवद्दास्यविधायकविशेषवचनैः "सर्वं परवशम्" इत्यादिसामान्यवचनसङ्कोचो न्याय्य इति ध्वनितम् । "सर्वेषामेव लोकानां पिता माता च माधवः" इत्युक्तभगवद्विषयपरिचरणं मातापितृपरिचरणमेवेति तस्य प्रियत्वं शास्त्रविहितत्वं चास्तीति सूचनाय माधवेत्युक्तम् । अतो दास्यं सुखरूपमेवेति न मुक्तस्यानन्दवैकल्यमिति भावः । पूर्वम् "तस्यानन्तसुखाप्तये च यतते लक्ष्मीसहायः स्वयं, तत्कारुण्यपुरस्सरो गुणगणस्तस्यायमुज्जृम्भते" इत्युक्तम् । अत्र माधवदास्यमित्युक्तम् । आभ्यां श्रीमच्छब्दयुक्तमन्त्ररत्नखण्डद्वयं प्रत्यभिज्ञायते । तत्र भगवदुपायत्वोपयोगिकारुण्यादिगुणगणोद्बोधकत्वलक्षणमुपायविशेषणत्वमेव लक्ष्म्या इति लक्ष्मीसहायपदेन सूचितम् । भगवद्दास्यगतरस्यतातिशयप्रयोजकभावेन प्राप्यवर्धकत्वेन च सह प्राप्यान्तर्गतत्वं लक्ष्म्या इति माधवपदेन सूचितम् । अनेन च इदमेव शारीरकचतुर्लक्षण्यभिप्रेतमिति सूचितम् । अत एव च "ब्रह्मणि श्रीनिवासे" इति शास्त्रार्थसङ्ग्राहके निर्दिष्टं भगवता । "पुच्छादिषु धात्वर्थ इत्येव सिद्धम्" इत्यत्रेवात्रापि, सिद्धं हि तदिति सिद्धशब्दो ग्रन्थान्तमङ्गलार्थः ॥ (103)

* * * *

[अव०] स्वकृतग्रन्थस्य श्रद्धेयतमत्वसिद्ध्यर्थं स्वस्य भगवद्भाष्यकारसंप्रदायाभिजातत्वं तत्प्रसादितश्रीभाष्यप्रवचनभद्रपीठाध्यक्षत्वं च वदन् स्वस्य प्रयोजनान्तरस्पृहामन्तरेण केवलदीनजनानुजिघृक्षातिशयेन तत्त्वसारग्रन्थकरणमाह—[वरदेत्यादि]

[मू०] वरदाह्वयमण्डनो मनीषी
यतिबृन्दारकभागिनेयपौत्रः ।
निगमान्तपयोधिकर्णधारो
विदधे विश्वहिताय तत्त्वसारम् ॥ (104)

[ व्या० ] यतिबृन्दारकस्य—यतिराजस्य, भगवद्भाष्यकारस्य, "बृन्दारकनागकुञ्जरैः पूज्यमानम्" - इत्यनेन समासः । भागिनेयः—भगिनीसुतो वत्साभिजनो वरदगुरुः, तस्य पौत्रः—पुत्रस्य पुत्रः ।

भगवतो भाष्यकृतो द्वे सोदर्ये । तत्रैकस्याः सुतो वाधूलदाशरथिः । यस्य खल्वजहद्भागिनेयत्वं प्रसिद्धम् । तदुक्तम्—

"इतरसुलभा किमेषा भाषा वाधूलदाशरथिरेकः ।
न परित्यक्तसत्यजताबन्धूनिति सदसि लक्ष्मणार्यकृता ? ॥" इति ।

अन्यस्यास्तु सुतो वात्स्यवरदगुरुः । तदुक्तम्—

"भूमिकमलाभिधाने पुण्ये रामानुजार्यसोदर्ये ।
याभ्यामुभावभूतां पुत्रौ दाशरथिवरदनामानौ ॥" इति ।

तस्यायं पौत्रः । अनेन "नास्याब्रह्मवित् कुले भवति" "नास्यावरपुरुषाः क्षीयन्ते" इत्यादिश्रुत्युक्तरीत्या ब्रह्मविदग्रेसरभगवद्भाष्यकारदेहसंबन्धनिबन्धनज्ञानप्रकर्षोऽभिसंहितः ॥

निगमान्त एव पयोधिः—वेदान्त एव दुग्धनिधिः, भगवदत्यन्ताभिमतत्व-विपुलत्वभोग्यत्वादिभिः सादृश्याद्रूपणं, तस्य कर्णधारः नाविकः । अत्र च श्रीभाष्य-स्याच्छिद्रां पारयिष्णुमित्युक्तरीत्या स्वप्रतिपाद्यवदेव नौसादृश्यं विवक्षितम् । अतस्तत्प्रव-चनभद्रपीठनियुक्तस्य स्वस्य कर्णधारत्वमुक्तम् । "कर्णधारस्तु नाविकः" इति कोशः । वरदाह्वयो मण्डनम्— अलंकारो यस्य स तथोक्तः । "भाष्यामृतप्रदानाद्यः संजीव-यति मामपि" इत्युक्तरीत्या वरदाभिधानमुख्याभिधेयभगवन्निष्ठपरमोदारत्वसदृशपरमोदार-त्वादिगुणयोगवतोऽस्य तदभिधानाभिधेयत्वं "हेम्नः परमामोदः" इति न्यायमनुसरति । अनेनास्याभिधानस्यात्र यादृच्छिकशब्दत्वं व्युदस्तम् । मनीषी—धीमतामग्रेसरः । विश्वेषाम्— मृदुमध्यतीव्रप्रज्ञानामधिकारिणां, हिताय—अपेक्षितसंग्रहविस्तरानुभय-रूपतया निर्दोषपुरुषार्थसाधनार्थम् । शिष्यहितायेति च पठ्यते । अर्थः स्पष्टः । विश्वेभ्यो हितं विश्वहितमिति चतुर्थी वा । 'चतुर्थी तदर्थ' इत्यादिना समासः । तत्त्वसारं— शारीरकप्रतिपाद्यार्थजातेष्वभ्यर्हितार्थजातप्रतिपादकताप्रयुक्ततद्वाचकपदवाच्यताकं ग्रन्थ-विशेषम् , विदधे—चक्रे । शिष्यहितस्य स्वहितत्वाभिसंधिना क्रियाफलस्य, कर्तृगामित्व-

परं आत्मनेपदं प्रयुक्तम् । भाष्यामृतनिर्वेवणसुखपरवशेन स्वेनापि ग्रन्थकरणमप्रतिसंहितमिति सूचनाय परोक्षे लिङुक्तः ॥ (104)

श्रीभाष्यमेरुकटकोदरलब्धमूर्तिं
सौदर्शनोक्तिदृढपञ्जरपाल्यमानम् ।
सच्चण्डमारुतरयं विजयैकहेतुं
सारौघमाशयतु वो मणिसारिणीयम् ॥

नारसिंहगुरोः पुत्रो वरदार्यकृपाधनः ।
वीरराघवदासोऽहं तत्त्वसारं व्यवीवरम् ॥

इति श्रीवाधूलकुलतिलकश्रीनरसिंहगुरुवरतनयेन तच्चरणपरिचरणपरायणेन श्रीमद्वाधूलवेङ्कटार्यसंभवश्रीवरदगुरुनिर्व्याजदिव्यकरुणासमधिगतनिगमान्तयुगलहृदयेन वीरराघवदासेन विरचिता तत्त्वसारव्याख्या रत्नसारिणीसमाख्या सम्पूर्णा ॥

24

# अशुद्धशोधनम्

## ERRATA

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 2 | 19 | [क्रेत्याति] | [क्रेत्यादि] |
| 3 | 16 | सङ्घः | सङ्घाः |
| ,, | 21 | सुषषु | सुखेषु |
| ,, | 24 | नित्यानुकूल-नुकूल | नित्यानुकूलमनुकूल |
| 7 | 10, 22, 23 | प्रमाण्यं | प्रामाण्यं |
| 8 | 1 | प्रमाण्यं | प्रामाण्यं |
| ,, | 18 | चैत्रय | चैत्राय |
| ,, | 25 | इदम् | इदं |
| 9 | 17 | -वस्तु | अखिलं वस्तु |
| 12 | 11 | निदिशतः | निर्दिशतः |
| 13 | 13 | विशेण | विशेषण |
| 14 | 3 | तत् क्षित्यादिकं | तत् [सर्वं] क्षित्यादिकं |
| ,, | 13 | अन्य-इति | अन्य[आधारसिद्धान्त]इति |
| ,, | 21 | भेदशर्शना | भेददर्शना |
| 15 | 7 | कुर्तुरैक्यस्य | कर्तुरैक्यस्य |
| 16 | 15 | कारणा,न्तरगणे | कारणान्तरगणे |
| ,, | 19 | समर्थत्वम् विप्रकृष्ट | समर्थत्वविप्रकृष्ट |
| 18 | 25 | इत्यात्राह | इत्यत्राह |
| 20 | 2 | इत्यभ्यां | इत्याभ्यां |
| ,, | | पा-अ. ३-३-२१ | पा-अ. ३-३-२९ |
| 21 | 5 | -तत्. | [उपदेशे कर्म स्यात्]तत् |
| ,, | 22 | अदिष्टा | आदिष्टा |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | 25 | आदेश | आदेशः |
| 22 | 7 | -करणेऽपि | [अत्र]करणेऽपि |
| ,, | 17 | साथक | साधक |
| ,, | 27 | इतित्युक्तेः | इत्युक्तेः |
| 23 | 1 | संज्ञायामपि | असंज्ञायामपि |
| ,, | 7 | [षष्ठये] | [षष्ठ्यै] |
| ,, | 14 | [नियोगित्वे] | [ानुयोगित्वे] |
| ,, | 21 | आन्नद | आनन्द |
| ,, | 24 | अनन्दमयस्य | आनन्दमयस्य |
| 24 | 12 | निरवयस्य | निरवयवस्य |
| ,, | 25 | सर्वपयर्या | सर्वपर्याय |
| 25 | 13 | राभिप्रता | रभिप्रेता |
| ,, | 17 | वक्य | वाक्य |
| ,, | 28 | मयाट् | मयट् |
| 26 | 3 | रूपप्रकरण | रूपकप्रकरण |
| ,, | 16 | इत्यद्यक्त | इत्याद्युक्त |
| ,, | 25 | सपद्मश्री | सपद्मः श्री |
| 27 | 23 | जासनं | आसनं |
| 28 | 1 | यद्व | यद्वा |
| ,, | 27 | त्यत्र।प्यल्लोप | त्यत्राप्याल्लोप |
| 29 | 4 | प्रत्ययापां | प्रत्ययानां |
| 30 | 7 | समुद्भुत | समुद्भूत |
| ,, | 10 | इत्यदेशापत्त्या | इत्यादेशापत्त्या |
| ,, | 11 | स्यत् | स्यात् |
| 34 | 6 | एवं | एव |
| 35 | 16 | अन्त्यनां | अन्त्यानां |
| ,, | 21 | सोऽय | सोऽयं |
| 36 | 9 | षड्मिः | षड्भिः |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ” | 21 | एवः | एव |
| ” | 26 | नैमितिकं | नैमित्तिकं |
| 37 | 6 | भवतीनळिनं | भवतिनळिनं |
| 38 | 22 | पयन्तत्वेन | पर्यन्तत्वेन |
| ” | ” | आग्रचप्राय | अग्रचप्राय |
| 41 | 9 | [कञ्ज] | [खञ्ज] |
| ” | 11 | सघातात्मक | सङ्घातात्मक |
| ” | 19 | परमणु | परमाणु |
| 44 | 17 | पुरुषं- | पुरुषं वेद |
| 45 | 18 | अन्तः | अन्तरः |
| 47 | 3 | पुंन्नपुंसकयोस्तु | पुन्नपुंसकयोस्तु |
| ” | 7 | निर्दिश्यमानायो | निर्दिश्यमानयो |
| 49 | 7 | इत्यादीनां । | इत्यादीनां, |
| ” | 24 | कर्तॄ | कर्तृ |
| ” | 25 | सिद्ध्यथम् | सिद्ध्यर्थम् |
| 50 | 1 | दिऽर्थ: | दित्यर्थ, |
| ” | 10 | पुरुषाणां । | पुरुषाणाम् । |
| 52 | 14 | अन्तप्रदेशे | अन्तःप्रदेशे |
| ” | 19 | देवताया | देवतायाः |
| ” | 25 | प्राजापत्यः | प्रजापतयः |
| 54 | 15 | आनन्दानुभाव | आनन्दानुभव |
| ” | 21 | इति । शेषः | इति शेषः |
| 55 | 7 | क्लसत्व | क्लृसत्व |
| ” | 26 | सिद्धेस्त्यर्थः | सिद्धेत्यर्थः |
| 57 | 20 | व्यत्पत्तिः | व्युत्पत्तिः |
| 60 | 23 | -तैरेवोक्तम् | इति तैरेवोक्तम् |
| 61 | 16 | अभावस्येत्यदिना | अभावस्येत्यादिना |
| 62 | 21 | रूपमेव | रूपभावमेव |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 64 | 6 | ण्यार्थ इति उच्यते | ण्यार्थ उच्यते |
| ,, | 9 | त्वल्लयत्वा | त्वल्ल्यनत्वा |
| ,, | 24 | तनोर्व्याकरणं | तयोर्व्याकरणं |
| 65 | 14 | त्वल्तत्वादिति | त्वल्ल्यनत्वादिति |
| ,, | 19 | शब्दर्थः | शब्दार्थः |
| 66 | 1 | इत्यत्नन्वयः | इत्यत्रान्वयः |
| ,, | 5 | वस्वामिभावं | स्वस्वामिभावं |
| 67 | 19 | मिधते | मिधत्ते |
| 68 | 21 | क्रमसाधन | क्रयसाधन |
| 70 | 23 | एकहानीद्रव्यमेव | एकहायनीद्रव्यमेकमेव |
| 71 | 3 | मुष्ट्याधिकरणे | मुष्ट्यधिकरणे |
| ,, | 5 | इति | इत्यत्र |
| ,, | 11 | परिमाणद्वरा | परिमाणद्वारा |
| 72 | 1 | दशः | दशभिः |
| ,, | ,, | द्वेशोनभिशुद्ध | द्वेशोनशुद्ध |
| ,, | 14 | मात्राविधानेन | मात्रविधानेन |
| 73 | 2 | स्फचेन | स्फयेन |
| ,, | 6 | कत्वाद्धहीनां | कत्वाभावाद्धहीनां |
| ,, | 16 | नैव | नैवं |
| ,, | 17 | कालस्यप्याघ्राने | कालस्याप्याघाने |
| 75 | 8 | प्रक्रमस्थ | प्रक्रमस्थ |
| 78 | 15 | वितरणादिरुपैः | वितरणादिरूपैः |
| ,, | 21 | धमः | धर्मः |
| 79 | 9 | ईश्वरा(न) | ईश्वरान |
| ,, | 10 | श्रयभावा | श्रयागावा |
| 80 | 11 | पराम | परमा |
| ,, | 13 | शक्त्याभिमानि | शक्त्यभिमानि |

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 81 | 5 | वात्सल्यादिगुण | वात्सल्यादिकल्याणगुण |
| 82 | 15 | संकराच्छाङ्करोदयः | संकराच्छङ्करोदयः |
| 84 | 23 | पार्श्वस्थैरु[रजु]पलभ्य | पार्श्वस्थैरुपलभ्य |
| 86 | 15 | नियम्य | नियाम्य |
| ,, | 21 | नियम्य | नियाम्य |
| 87 | 3 | नियम्य | नियाम्य |
| 91 | 25 | इत्यत्र | इत्यत्र च |
| 92 | 13 | धिकृत | धिकृत |
| ,, | ,, | बाधितम् अत | बाधितम्। अत्र भवतीति शेषः। अत |
| ,, | 22 | पाधित्वकम् | पाधिकत्वम् |
| 93 | 6 | प्रयोगाकौशल | प्रयोगकौशल |
| ,, | 24 | इत्यदिः | इत्यादिः |
| 94 | 16 | स्वप्नप्रत्ययवत् | स्वाप्नप्रत्ययवत् |
| 96 | 7 | अध्यहार | अध्याहार |
| ,, | 8 | जातीयैः | जातीयः |
| 98 | 10 | परिहृतः | परिहृता |
| 100 | 14 | सद्भावादि | सद्भावासद्भावादि |
| 102 | 23 | ज्ञानबिषया | ज्ञानविषया |
| 104 | 13 | अत्र च-घटादिस्वरूप | अत्र च घटादिप्रकाशस्य घटादिस्वरूप |
| 105 | 11 | सुप्यजतौ | सुप्यजातौ |
| 108 | 1 | स्फूर्तिरुक्ता | स्फूर्तिरुक्ता |
| ,, | 12 | -स्वरूपातिरिक्त | आत्मनि स्वरूपातिरिक्त |
| 111 | 12 | जोवन्मुक्तिमतं | जीवन्मुक्तिमतं |
| 114 | 16 | अनुष्ठानात्मकत्वस्य | अनुष्ठानानात्मकत्वस्य |
| ,, | 18 | वाक्यार्थानां | वाक्यानां |
| 115 | 6 | मार्गं | भागं |
| 117 | 19 | भूयः सङ्घः | भूतसङ्घ |
| 119 | 25 | क्विप् | क्यप् |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 120 | 5 | श्रुतकल्याण | श्रुतशुभकल्याण |
| 123 | 6 | चतुर्विंशति | चतुर्विंशति |
| 124 | 23 | ध्रवमचल | ध्रुवमचल |
| 125 | 1 | सुबालोपनित्कठवल्ली | सुबालोपनिषन्महोपनिषत्कठवल्ली |
| 126 | 16 | सुतमसूत | सुतमभ्यसूत |
| ,, | 17 | तच्छन्नभ्याकाङ्क्षत | तच्छब्दमकाङ्क्षत |
| ,, | 22 | सूर्थः— | सूर्थ इत्येते |
| ,, | 27 | शब्दानां | शब्दादीनां |
| 130 | 25 | पारिहारः | परिहारः |
| 136 | 9 | 18 | 78 |
| ,, | 11 | प्रत्युक्तम् | प्रयुक्तम् |
| 138 | 22 | शब्दामिधेयो | शिवशब्दामिधेयो |
| 139 | 13 | अनुष्टभ | अनुष्टुभ |
| 151 | 13 | प्रायेणान्तर | प्रायेणावान्तर |
| ,, | 16 | तच्छब्दैनिर्दिश्य | तच्छब्दैर्निर्दिश्य |
| 152 | 1 } | प्रकान्त | प्रक्रान्त |
| ,, | 6 } | | |
| ,, | 26 | सिद्धन्ते | सिद्धान्ते |
| 153 | 27 | हरिरूपासनीयः | हरिरुपासनीयः |
| 157 | 9 | प्रयुक्ता | प्रयुक्तं |
| ,, | 16 | ध्याता धाता | धाता ध्याता |
| ,, | 20 | वैरुप्याच्च | वैरूप्याच्च |
| 159 | 28 | पिता पुत्रेण " पितृमान् | " पिता पुत्रेण पितृमान् |
| 160 | 22 | शुम्भुशब्दः | शम्भुशब्दः |
| 161 | 13 | गन्घ | गन्ध |
| 164 | 11 | राजहाराज | राजमहाराज |
| 165 | 22 | वाच्यत्वदीश्वर | वाच्यत्वादीश्वर |
| ,, | 25 | प्रसङ्ग | प्रसङ्गः |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 167 | 20 | भवेद्भ्रया | भवेदप्रचा |
| 168 | 10 | मध्य: | मध्य |
| ,, | 26 | 97 | 96 |
| 169 | 4 | प्रसिंद्धप्रणा | प्रसिद्धप्राणा |
| 176 | 17 | श्रवणावसरलभव | श्रावणावसरलभव |
| 177 | 5 | कर्मणाम् | कर्मणां |
| ,, | 25 | मीष्टास्वर्थं | स्वामीष्टार्थं (स्वामीष्टानर्थं) |
| 180 | 7 | इद | इदं |
| ,, | 8 | नियुक्त" | नियुक्तः" |
| 181 | 10 | । सोपाधिकत्वं च | सोपाधिकत्वं । |
| 182 | 19 | दुःखतासाधनम् | दुःखतासाधनं |

---

